श्री बलदेव-विद्याभूषण-विरचिता

# साहित्य-कौमुदी

## काव्य प्रकाश-टीका



डॉ. वीरेन्द्रनाथ पाण्डेय

# ग्रन्थ-परिचयः

संस्कृतसाहित्येऽलङ्कारशास्त्रस्य विस्तृत इतिहासो वर्तते। आचार्याणामलङ्कारशास्त्रीयग्रन्थानाटञ्च सुदीर्घा परम्परा। तत्र आचार्येषु वाग्देवतावतारो मम्मटः तद्ग्रन्थः काव्यप्रकाशोऽ नितरसाधारणं स्थानं बिभ्रतः काव्यप्रकाशटीकाश्च सर्वाधिका वर्तन्ते। तासु श्रीबल-देव-विद्याभूषणस्य साहित्य-कौमुदीह टीका महत्त्वपूर्णं स्थानं बिभर्ति। यद्यपि टीकग्रन्थोऽयं तथापि स्वतन्त्र-ग्रन्थरुपेणापि अस्य महत्त्वमस्त्येव। अप्रकाशित-पूर्वोऽयं ग्रन्थः सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य सरस्वतीपुस्तकालये पाण्डुलिपिरूपेण सुरक्षितोऽस्ति। एतद्ग्रन्थस्यैव ससमीक्षं सम्पादनात्मिका कृतिरियं सरस्वती-समुपासकानां समक्षं प्रस्तुता विद्यते।

अत्र ग्रन्थे भागद्वय मस्ति। प्रथमः समीक्षात्माको भागः, द्वितीयश्च मूलग्रन्थः। समीक्षात्मके भागे पञ्च अध्यायाः।तत्र प्रथमेऽध्याये काव्यप्रयोजनम्, काव्यकारणम्, काव्यस्वरूपम्, द्वितीयेऽध्याये शब्दार्थवृत्तिविचारः, वाच्य-वाचक विवेचनम्, लक्ष्य-लक्षक-विवेचम्, व्यङ्ग-व्यञ्जक-विवेचनम्, तृतीयेऽध्याये काव्यभेदाः ध्वनिविवेचनम्, गुणीभूतव्यङ्ग्यविवेचनम्, अवरकाव्यविवेचनम्, चतुर्थेऽध्याये दोष विवेचनम्, पञ्चमेध्याये गुण विवेचनम्, शब्दार्थालङ्कारविवेचनञ्चेति।

द्वितीयभागे मूलग्रन्थस्य एकादश परिच्छेदाः सन्ति। तत्र प्रथमे परिच्छेदे काव्य प्रयोजन-हेतु-स्वरूपविशेषनिर्णयः, द्वितीये शब्दनिर्णयः, तृतीयेऽर्य निर्णयः, चतुर्थे ध्वनिभेदनिर्णयः, पञ्चमे गुणी भूतव्यङ्ग्यभेदनिर्णयः, षष्ठ चित्रभेदनिर्णयः, सप्तमे दोष निरूपणम्, अष्टमे गुणाऽलङ्कार-भेदनिर्णयः, नवमे शब्दालङ्कार निरूपणः, दशमेऽर्थालङ्कारनिरूपणस्तथै कादशे परिशिष्टालङ्कारनिरूपणश्चेति।

भूमिका-सन्दर्भग्रन्थसूचि-नानाऽनुक्रमणिकाभिः सुसज्जितेयं कृतिः सर्वाङ्गपरिपूर्णा विद्यते। जिज्ञासूनां संस्कृतज्ञा। विदुषाञ्च हृदयं नूनमावर्जयिष्यतीति सुदृढो विश्वासः।

**मूल्य रु0-500/-**

श्री बलदेव-विद्याभूषण-विरचिता:

# साहित्य-कौमुदी

## (काव्यप्रकाश-टीका)

डॉ. वीरेन्द्रनाथ पाण्डेय:
(व्याख्याता साहित्य विभाग:)
भारतेश्वरी मारवाड़ी संस्कृत महाविद्यालय
छपरा

**आदित्य बुक सेन्टर**

वाराणसी उ० प्र०

*प्रकाशक :*

सूर्यनारायण मिश्र

**आदित्य बुक सेन्टर**

बी. 1/123- गोयनका गली, अस्सी, वाराणसी-5



प्रथम संस्करण-2005

आई.एस.बी.एन नं० :

मूल्य - रु० 500/-

*कम्प्यूटर अक्षर संरचना :*

**नीत्या कम्प्यूटर्स**

**बी. 2/134, भदैनी, शिवाला**

**वाराणसी - दूरभाषः - 9839151980**

**मुद्रक**

**श्रीमाता कम्प्यूसिस प्रा. लि.**

बी. 7/193, केदारघाट, वाराणसी

दूरभाष - 0542 - 2275272, 2275274



# समर्पण

प्रातः स्मरणीय, प्रेरणा स्रोत स्व0 राम लग्न पाण्डेय पितामह को सादर समर्पित जिनके आशीर्वाद से यह कृति अल्प समय में इस रूप में हमारे सामने आई।

# विषयानुक्रमणिका





# प्रस्ताविकम्

असारे ह्यस्मिन् संसारे वर्तमानाः सर्वे जनाः सर्वदा निरतिशयं सुखं प्राप्तुं सर्वथा प्रयतन्ते। तत्र लौकिकसुखसाधनानि अनित्यानि कमनीयकान्तादीनि, अलौकिकसुखसाधनानि च ब्रह्मज्ञान-वेद-वेदान्तज्ञानादीनि सन्ति। लौकिसुखसाधनानि नश्वराणि क्षणिकानि, तज्जन्य आनन्दोऽपि क्षणिक एव किन्तु अलौकिकसुखसाधनेभ्यो जातं सुखं तु चिरस्थायि नित्यञ्चेति। भौतिकवादधर्मसन्तप्ताः जनाः अलौकिकसुखमयीमध्यात्मच्छाया-माश्रयन्ते। इयमाध्यात्मिकतैव भारतीयायाः संस्कृतेः मूलम्, ययाऽस्माकमियं भारतीया संस्कृतिः विश्वस्मिन्नस्मिन् दोधूयमाना पताकेव शिरसि वर्तमाना राजतेतरां सकलदेशसंस्कृतिषु। अध्यात्मप्रतिपादकानि वेदशास्त्राणि प्रथितानि। सकलशास्त्रसमवायात्मकं साहित्यापरपर्यायम्, रमणीयार्थप्रतिपादकम्, समुचितललितसन्निवेशचारु काव्यं चतुर्वर्गफलप्रदायकम्, ब्रह्मानन्दसहोदरनित्यरससन्दोहजनकं चेति नास्त्यविदितं प्रेक्षावताम्।

**चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।**
**काव्यादेव ..............................................॥**

इति भामहोक्तिदिशा वेदशास्त्रविलक्षणानां काव्यानां महत्त्वं नापलापार्हमिति सिद्धैव काव्योपादेयत्वमिति। काव्यशास्त्रग्रन्थोऽपि काव्याङ्ग एवेति, यद्वा काव्यगुणदोष-विवेचनात्मकतया सर्वथा ग्राह्य इति ध्यायं ध्यायं काव्यशास्त्रीयग्रन्थमादायैव अनुसन्धानस्य मम मनसि पूर्वत एवासीत् प्रबलाभिलाषः।

प्राप्ते काले साहित्याचार्यपरीक्षोत्तीर्णेन मया अनुसन्धानयोग्यं काव्यशास्त्रीयग्रन्थ-मन्विषता सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीय- सरस्वतीभवनपुस्तकालये श्रीबलदेव-विद्याभूषणेन विरचितः साहित्यकौमुदी- नामकः काव्यशास्त्रीयो ग्रन्थः पाण्डुलिपिरूपेण प्राप्तः। विषयेऽस्मिन् गुरुचरणानामनुकम्पामयीं स्वीकृतिञ्चाप्त्वा नर्तितमिव मन्मनोमयूरेण। अनुसन्धानपञ्जीकरणार्थमावेदितः समीक्षं साहित्यकौमुद्याः सम्पादनात्मकोऽयं विषयः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयाऽनुसान्धानसमितिसदस्यैश्चानुमोदित इति,

अस्य मम शोधग्रन्थस्य भागद्वयमस्ति- (1) समीक्षात्मको भागः, (2) ग्रन्थात्मकश्चेति। तत्र समीक्षात्मके भागे पञ्चाऽध्यायाः सन्ति। तत्र प्रथमेऽध्याये साहित्यकौमुदी-कारस्य परिचयः, साहित्यकौमुद्याः प्रतिपाद्यो विषयः, साहित्यकौमुदी-काव्यप्रकाशश्च, काव्यप्रकाशो भरतश्चेति तथा काव्यप्रयोजनम्, काव्यकारणम्, काव्यस्वरूपञ्चेति विषयाः प्रतिपादिताः सन्ति। शब्दार्थवृत्तिविचारात्मके द्वितीयेऽध्याये वाच्यवाचकविवेचनम

(वाचकशब्दस्वरूपम्, अभिधावृत्तिः, वाच्यार्थस्वरूपञ्चेति) लक्ष्यलक्षकविवेचनम (लाक्षणिकशब्दः, लक्षणास्वरूपं लक्ष्यार्थस्वरूपञ्चेति) व्यङ्ग्यव्यञ्जकविवेचनम् (व्यञ्जकः शब्दः, व्यञ्जना वृत्तिः व्यङ्ग्यार्थश्चेति) इत्यादीनां निरूपणं कृतमस्ति। तृतीयेऽध्याये काव्यभेदानां ध्वनि- गुणीभूतव्यङ्ग्यावराणां (उत्तममध्यमाधमानां) विवेचनं कृतमस्ति। चतुर्थेऽध्याये काव्यात्मभूतरसापकर्षकाः दोषाः विवेचिताः सन्ति। अन्तिमे पञ्चमेऽध्याये काव्योत्कर्षकानां गुणानामलङ्काराणां च विवेचनं कृतमस्ति।

साहित्यकौमुद्याः समीक्षाप्रसङ्गे यथामति मया कृतमिदं विवेचनं कियदुचितम्, अनुचितं वेति काव्यतत्त्वज्ञाः सहृदया एव प्रमाणम्। मन्ये अत्रत्यं दोषं मनसि कथमपि न निधाय काव्यरसरसिकाः, भावकाः, भावयित्रीभावनाभावितहृदयाः सहृदयाः सदयं मदीयं प्रबन्धं स्वीकृत्य मां कृतार्थीकरिष्यन्तीति।

कार्येऽस्मिन् अस्मद्गुरुचरणानाम्, साक्षान्मानवतास्वरूपाणाम्, नीरक्षीरविवेके हंसायमानानाम्, व्याकरणसाहित्यादिसकलशास्त्रपारावारपारीणानाम्, तपःसम्पत्तिनिर्धूत-सकलकलिकल्मषाणाम्, विद्वन्मण्डलमण्डनायमानानाम्, तत्रभवताम्, श्रीमताम्, सम्पूर्णानन्द-संस्कृतविश्वविद्यालयीये साहित्यविभागे उपाचार्याणाम् डॉ. श्री वायुनन्दन-पाण्डेयमहोदयानां चरणकमलेषु प्रणामततिं समर्पयन् भूयो भूयः स्वकीयां कृतज्ञतां ख्यापयामि येषामनुग्रहेण सततं सफलनेन च निर्देशनेन कार्यमिदं पूर्णतां यातम्।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीय साहित्यविभागं प्रति, अनुसन्धानसमितिं प्रति, राष्ट्रीय संस्कृतसंस्थानम्प्रति, सरस्वतीभवनपुस्तकालयं प्रति च बहु कृतज्ञोऽस्मि। येभ्यः प्रत्यक्षाऽप्रत्यक्षेण येन केनापि रूपेण साहाय्यमाप्तं तान् सर्वान् प्रति स्वकीयां कृतज्ञतां ज्ञापयामि।

*विदुषां वशंवदः*

***- डॉ. वीरेन्द्रनाथ पाण्डेयः***



# पुरोवाक्

भगवतः विश्वनाथस्य जगदम्बायाश्च परमानुकम्पया बिहारराज्योद्भवबलदेव-विद्याभूषण-विरचिता परमविश्रुता काव्यप्रकाश-व्याख्या 'साहित्यकौमुदी' प्राकाश्यमुपैतीति विज्ञाय प्रमोदभरतुन्दिलमनुभवामि आत्मानम्। संस्कृत-काव्यशास्त्राकाशे दिनमणिरिव विद्योतमानेन विलक्षणप्रतिभान्वितेन तत्रभवता मम्मटाचार्येण निजप्रखर-प्रतिभाबलेन भरतमारभ्य भोजराजपर्यन्त-पूर्वाचार्य-निरूपितान्निखिलशास्त्रीयसिद्धान्तानेकत्र निजविश्रुतग्रन्थे 'काव्य प्रकाशे' विन्यस्य विशदं विविच्य च तत्प्रकाशेन सकलमपि परवर्तिकाव्यशास्त्रसंसारं प्रकाशान्वितं विहितमिति सुविदितचरमेव समेषामपि सुधियाम्। वस्तुतस्तु वाग्देवतावतारेण काव्यशास्त्रे नूतनयुगप्रवर्तकेन तत्रभवता मम्मटाचार्येण प्रणीतः काव्यलक्षणापराभिधः 'काव्यप्रकाशः' एकादशशतकोत्तरार्द्धभागमारभ्याद्यावधि प्रायोऽष्टशताधिकवर्षेभ्यः निरन्तरमविच्छिन्नरूपेण देदीप्यमाननक्षत्रमिव राराजते अलङ्कारशास्त्रगगने। ग्रन्थरत्नस्यास्य वैशिष्ट्यं महत्त्वञ्चैतावतैव विज्ञायते यन्न केवलमासेतुहिमाचलं निखिलेऽपि भारतीयवाङ्मये अपितु समस्तेऽपि विश्ववाङ्मये ससम्मानं सश्रद्धञ्च समुद्ध्रियते ग्रन्थोऽयं विविधविश्वभाषासु काव्यालोचनप्रसङ्गे समालोचकैः। अतएव काव्यप्रकाश-गम्भीर-भावावबोधाय संस्कृते, हिन्द्यां, क्षेत्रीयभाषासु, विदेशीयभाषासु च ग्रन्थस्यास्य अनुवादः परश्शताष्टीकाश्च नयनपथमुपयान्ति। काव्यप्रकाशस्य लोकप्रियत्वमुपादेयत्वञ्चानेनैव तथ्येन स्पष्टीभवति यत् एकतो यत्र भरतोद्भटरुद्रटानन्दवर्धन-भामह-धनञ्जयादिप्रणीत-काव्यशास्त्रीय-ग्रन्थानाम् एको द्वित्रा एव वा टीकाग्रन्थाः प्रणीताः तत्रैवापरतः काव्यप्रकाशस्य शताधिकटीकानां सुदीर्घशृङ्खला समुपलभ्यते।

काव्यप्रकाश-टीकाकारः कमलाकरभट्टः ग्रन्थस्यास्य टीकावैभवं समुद्दिश्य निरूपयति निजटीकायाम् - 'काव्यप्रकाश-टिप्पण्यः सहस्रं सन्ति यद्यपि'। टीकाकारः महेश्वरोऽपि तथैव भणति-

"काव्यप्रकाशस्य कृता गृहे-गृहे टीकास्तथाप्येष तथैव दुर्गमः।।"

प्रायः समस्तशास्त्राचार्याः काव्यप्रकाशमाधृत्य टीका-ग्रन्थान् विलिख्य निजवैदुष्यं सफलमकुर्वन्निति नास्त्यविदितं विदुषाम्। उदाहरणार्थं रुय्यक-विश्वनाथादयः आलङ्कारिकाः, वैयाकरणः नागेशभट्टः, जैनः माणिक्यचन्द्रः, नैयायिकः जगदीशः नरसिंहश्च, मीमांसकः कमलाकरभट्टः, तान्त्रिकः गोकुलनाथः, वैष्णवः बलदेवविद्याभूषणः प्रभृतयो विविधशास्त्रनिष्णाताः सुधियो काव्यप्रकाशटीकाः प्रणीय गौरवभाजः सञ्जाताः।

एतदतिरिक्तमपि काव्यप्रकाशस्य सुदीर्घटीकापरम्परायां नरहरिसरस्वतीतीर्थस्य 'बालचित्तानुरञ्जनी', सोमेश्वरस्य 'काव्यादर्शः', चण्डीदासस्य 'दीपिका', श्रीधरस्य 'विवेकः', भट्टगोपालस्य 'साहित्यचूडामणिः' विद्याचक्रवर्तिनः 'सम्प्रदायप्रकाशिनी', परमानन्दचक्रवर्तिनः 'विस्तारिका', श्रीवत्सलाञ्छनभट्टाचार्यस्य 'सारबोधिनी', सिद्धिचन्द्रस्य 'काव्यप्रकाशखण्डनं', महेश्वरस्य 'आदर्शः', भीमसेनदीक्षितस्य 'सुधासागरः', वामनाचार्यझलकीकरस्य 'बालबोधिनी'- प्रभृतयः शतशष्टीकाः काव्यप्रकाशस्य दुरूहस्थलानां विवेचनं विदधति। वामनाचार्येण झलकीकरेण निज- 'बालबोधिनी'- टीकायां एकोनविंशति-टीकाकाराणां मतान्युद्धृतानि यथास्थानम्। किञ्च डॉ. ज्योत्स्नामोहनेन षोडशटीकोपेतस्य काव्यप्रकाशस्य सम्पादनं विहितं यस्य प्रकाशनं दिल्लीस्थितेन नागप्रकाशनेन विहितम्। किन्तु अद्यापि अनेकाः टीका अप्राप्ताः अप्रकाशिताश्च विविधसंग्रहालयेषु पुस्तकालयेषु च मातृकारूपेणावस्थिताः सर्वथा समुपेक्षिताः सन्तीति नितरां मर्मन्तुदोऽयं विषयः।

काव्यप्रकाशटीकासु अन्यतमा महत्त्वपूर्णा चैका टीका 'साहित्यकौमुदी'-संज्ञिका श्रीबलदेव-विद्याभूषण-विरचिता परमविश्रुतापि सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य सरस्वती-भवन-पुस्तकालये पाण्डुलिपिरूपेण विराजिताऽद्यावधि अप्रकाशितासीत्। टीकाकार-बलदेव-विद्याभूषणस्य कालः अष्टादशशताब्द्याः उत्तरार्द्धभागः (प्रायः 1760 ई.) इति स्वीकुर्वन्ति विपश्चितः। ग्रन्थस्यैकादशपरिच्छेदे परिशिष्टालङ्कार-निरूपणप्रसङ्गे साहित्यदर्पणस्य कुवलयानन्दस्य च प्रत्यक्षप्रभावदर्शनादेषःतत्परवर्तीति निश्चप्रचम्। एषः बलदेवशिष्यः, उद्धवदासस्य गुरुः, विप्रवंशोद्भवः,परमवैष्णवः, चैतन्यमहाप्रभुभक्तः, बङ्गदेशीयः, अनेक-ग्रन्थ-प्रणेता चासीदिति पाण्डुलिपेः परिचयटिप्पण्यां सङ्केतितम्। किन्तु समासोक्त्यलङ्कारोदाहरणश्लोके विहारराज्यस्य पश्चिमभागे उत्तरप्रदेशसीमायां प्रवहन्त्याः कर्मनाशानद्याःवर्णनादयं पश्चिमबिहारप्रदेशोद्भवआसीदिति केषाञ्चन मतम्।

विपश्चिदपश्चिमेन काव्यसमालोचकप्रवरेण तत्रभवता बलदेव-विद्याभूषणेन विरचिता काव्यप्रकाशव्याख्याभूता 'साहित्यकौमुदी' एकादशपरिच्छेद-सम्बलिता दुरूहस्थलानामपि विवेचनमतिसरलपद्धत्या करोति। ग्रन्थेऽस्मिन् बलदेवः प्रायः मम्मटमतमनुसरन्नपि क्वचिन्निजवैमत्यमपि प्रदर्शयति। उदाहरणार्थं काव्यकारणताविवेचनक्रमे मम्मटः शक्ति-निपुणताभ्यासानां त्रयाणामपि दण्ड-चक्र-चीवरादिन्यायेन समुदितकारणतामङ्गीकरोति 'हेतुर्न तु हेतवः' इति निरूपयन्। किन्तु विद्याभूषणस्तु साहित्यकौमुद्यां त्रयाणां समुदितानां कारणतां प्रतिपाद्य 'काव्ये केवलं प्रतिभा कारणम्- इति कतिपयालङ्कारिकमतमपि स्वीकरोति। एवमेव रसनिरूपणप्रसङ्गे रसानां नवसंख्या साहित्यकौमुदीकारस्याभीष्टा नास्ति। स तु शृंगार-हास्य-करुण-वीर-रौद्र-भयानकाद्भुत-बीभत्स-शान्तरसेभ्योऽतिरिक्तान् दास्य-सख्य-वात्सल्याख्यानपि रसान् अङ्गीकरोति। यद्यपि सन्ति काव्यप्रकाशस्य

शताधिकाष्टीकाः किन्तु बलदेवविद्याभूषण-रचितेयं साहित्यकौमुदी दर्शनान्तराणां शास्त्रार्थं विवादादिकञ्चोपेक्ष्य अत्यन्तसरलया गिरा दुरूह-विषयानपि सहजमेव सामान्यजनबोधगम्यान् विधत्ते इति ग्रन्थस्यास्ति महत्त्वं महद्वैशिष्ट्यञ्च।

तदेतादृशस्य ग्रन्थरत्नस्याद्यावध्यप्रकाशितस्य ससमीक्षं सम्पादनं विधीयते छपरास्थ-भारतेश्वरी-मारवाड़ी-संस्कृत-महाविद्यालयीय-साहित्य-प्राध्यापकेन आयुष्मता डॉ. वीरेन्द्रनाथ पाण्डेयेनेति निशम्य नितरां प्रमोदमावहति मे मानसम्। सम्पादकस्यानेन प्रयासेन न केवलं काव्यशास्त्रज्ञा एव, अपितु जिज्ञासवः सामान्यजनाः, अनुसन्धातारश्च उपकृताः भविष्यन्ति, संवर्धयिष्यति च ग्रन्थरत्नमिदमलङ्कारवाङ्मयस्य सुषमामिति दृढं विश्वसिमि। भगवतः विश्वनाथस्य चरणारविन्दयोर्निजप्रणामाञ्जलिं विनिवेदयन् सम्पादकस्य दीर्घायुष्यं नित्यं नूतनानुसन्धानशीलत्वञ्च कामयमानः सभाजयामि तं शुभाशीर्वचोभिरिति शम्।

जन्माष्टमी
( 2061 वैक्रमाब्दः )

**प्रो. वाचस्पतिशर्मा त्रिपाठी**
पूव-विभागाध्यक्षः सङ्कायाध्यक्षश्च
कामेश्वर सिंह- संस्कृत-विश्वविद्यालयः
दरभङ्गा



# प्राक्कथनम्

अलंकारशास्त्रे काव्यात्मविषयकविचार एव प्राधान्यं भजते, रीति-गुणाऽलङ्काराणां विवेचनन्तु तत्र तदङ्गतयैवेति काव्यात्मविद्याविदो विदन्ति। वङ्गप्रदेशीय-बलदेवविद्याभूषणस्य साहित्यकौमुद्यां मम्मटस्य काव्यप्रकाशमाधृत्य तादृशाः सर्वे विषयाः सङ्कलिताः येषु काव्यात्मविचारो वरीवर्ति। वस्तुतत्त्वस्याज्ञानात् स्वसम्प्रदाय-प्रतिष्ठापनमूलकदुराग्रहाद्वा रस-ध्वनि-भिन्नानामपि अलंकारादयोऽपि कदाचित् काव्ये अङ्गित्वमभजन्। काव्ये वस्तुतः रस-ध्वनेरेवोत्कर्षकतया अलङ्कार-गुण-रीति-वक्रोक्त्यादीनामौचित्य-पूर्णं विधानं भवतीति जानन्त्येय निष्पक्षपातिनो विबुधाः समालोचकाः।

सर्वप्रथमं भूतभावन-भगवते विश्वनाथाय मुहुर्मुहुः प्रणामाञ्जलीन् प्रस्तौमि येषाम् प्रेरणामयी-काशी-नगर्यां तेषामेव प्रेरणया प्रथम-कृति-प्रणयने प्रवृत्तोऽहम्। तदनुसारं साक्षात् शिवस्वरूपस्य पूज्यगुरुदेवस्य आचार्यश्रीवायुनन्दनपाण्डेयस्य चरणेषु नतमस्तकः येषाम् संशोधन-निर्देशनाऽऽशीर्वचसां फलस्वरूपेण जिज्ञासूनां विदुषां विद्यार्थिनां च यद्येत् पुस्तकं जिज्ञासाशान्तिं कुर्यात् तदा सफलोऽयं मे परिश्रमः स्यादिति।

मम पूज्यपितामहानां सर्वशास्त्र-वाचस्पति-मीमांसा-भूषणानां स्व० रामलग्न पाण्डेयानां कृपा-प्रसादस्य त्विदं फलं-यत् बौद्धिकं शारीरिकञ्च पोषणं प्रदाय एतद् योग्यं मामकरोत्। तच्चरणेषु मम कोटिशः प्रणामाः।

स्व-गुरुवर्याणां डॉ. कैलासपति-त्रिपाठि-महोदयानामहं नितरामधर्मणो यत्कृपाप्रसादेन कार्येऽस्मिन् सफलोऽभवम्। एतदर्थं तच्चरणेषु मम भूयोभूयो नतयः।

साहित्य-वाचस्पतेः पं. डॉ. वाचस्पतिशर्मत्रिपाठिमहाभागानां हृदयेनाहमाभारं मन्यमानस्तं प्रणमामि यो हि पुस्तकमिदमाशीर्वादेन सभाजयित्वा मामनुगृहीतवान्।

पूज्यानामग्रजानां (मुख्य अभियन्ता-भा.सं. निगम लिमिटेड) श्री शम्भूनाथ-पाण्डेयानामहमाभारं स्वीकरोमि येषां योग्य-परामर्शैर्नितरामुपकृतः।

मुख्यतया स्व-धर्मपत्न्याः श्रीमत्याः मञ्जूदेव्या आभारमङ्गीकरोमि यस्या मङ्गलप्रदप्रेरणाभिरिमं लघुप्रयासं साहित्यक्षेत्रे समानेतुं प्राभवम्।

लेखनकार्येऽस्मिन् येषां लेखकानां कृतिभिः यत्किञ्चित् सहयोगः प्राप्तः हृदयेनाहमाभारं मन्ये।

अन्ततः गुणैकपक्षपातिनं विद्वत्समाजं स्व-लघुप्रयासस्य त्रुटीनां कृते क्षमां याचमानो निवेदयामि यत् ते पुस्तकेऽस्मिन्नावश्यकं संशोधनस्याऽमूल्यं विचारं प्रदायाऽस्योपयोगित्वे कृपया सहयोगं प्रयच्छन्तु इति।

**डॉ. वीरेन्द्रनाथ पाण्डेयः**



# ग्रन्थकारस्य परिचयः

साहित्यकौमुदीकारस्य श्रीबलदेवविद्याभूषणस्य जीवनवृत्तविषये किञ्चिदपि ज्ञातं नास्ति। अयं कदा कस्मिंश्च देशे जनिमलभत काश्च रचनाः कृतवानित्यादि किमपि ज्ञातं नास्ति। प्राचीनपरम्परामनुपालयताऽनेन स्वकीये ग्रन्थे कुत्रापि प्रत्यक्षाऽप्रत्यक्षरूपेण स्वपरिचयो न दत्त इत्यस्य जीवनवृत्तविषये अन्धकार एवास्ति इतिहासकाराणां समक्षम्।

सरस्वती-भवन-पुस्तकालयस्थायां साहित्यकौमुदीपाण्डुलिप्यां परिचायकटिप्पण्यामिदं सङ्केतितमस्ति यदयं बङ्गदेशीयः, ब्राह्मणवंशोत्पन्नः, वैष्णवधर्मावलम्बी चासीत्। अयं दामोदरदासस्य शिष्यः आसीत् तत्र उद्धवदासनामा कश्चिदस्य शिष्यत्वेन सङ्केतितोऽस्ति। प्रारम्भेऽस्य नाम बलदेव आसीत्, सकलविद्याविभूषितश्चायं पश्चाद् ''विद्याभूषण'' इत्युपाधिना विभूषितः सन् विद्याभूषण इति नाम्ना प्रसिद्धो जातः। अनेन च बहवो ग्रन्था विरचिता इति-

''अयं विद्याभूषणनाम्ना प्रसिद्धो बलदेवनामा, बङ्गदेशीयद्विजकुलभूषणो वैष्णवसम्प्रदायान्तर्गतश्रीचैतन्यमहाप्रभुभक्तः, तदीयमतपोषकः, श्रीदामोदरदासशिष्यः, उद्धवदासगुरुः, बहून ग्रन्थान् रचयामास।''[1]

साहित्यकौमुद्याः अध्ययनेन तु अस्य चैतन्यमहाप्रभुभक्तत्वं वैष्णवसम्प्रदायावलम्बनत्वञ्चानायाससिद्धमस्ति। प्रायो राधाकृष्णपरकाव्यंश्लोकानामुदाहरणेऽनेन समधिकं प्रयासः कृतोऽस्ति। अगत्या यत्र राधाकृष्णश्लोकाः न सन्ति त एव विषया अन्यैः श्लोकैः उदाहृताः सन्ति। अस्य बङ्गदेशीयत्वं तु दार्ढ्येन नैव कथयितुं शक्यते यतो हि कुत्राप्यस्य बङ्गदेशपक्षपातो नैव प्रदर्शितः, यदस्य बङ्गदेशीयत्वं संसाधयेत्। समासोक्त्यलङ्कारोदाहरणेऽनेन कर्मनाशानद्या वर्णनं समुपस्थापितमस्ति-

**त्यजन्कुवलयाधिकां घनरसश्रियोल्लासिनीं**
**पुरः सुरतरङ्गिणीं मधुरमत्तहंसस्वनाम्।**
**मलीमसपयोधरामपि मदान्धपद्मिन्निमां**
**भजन्किमिव पङ्किनामहह कर्मनाशामसि।।**

इति। कर्मनाशा नदी बिहारप्रान्तस्य पश्चिमे भागे उत्तरप्रदेशसीमायां प्रवहति। अतो जन्मनाऽयं पश्चिमबिहारी आसीदिति नास्ति सन्देहः। अस्य नामापि बलदेव इति बङ्गीयं नास्ति।

**भूमौ भारतमुत्तमं मधुपुरी तत्रापि तत्राप्यलं**
**वृन्दारण्यमिहापि हन्त पुलिनं तत्रापि रासस्थली।**
**गोपीकान्तपदद्वयीपरिचयप्राचुर्यपर्याचिता**
**यस्यां सन्ति महामुनेरपि मनोराज्यार्चिता रेणवः।।**

इति मथुरावृन्दावनपक्षपातस्तु पदे पदे द्रष्टुं शक्यते। अनेन सिद्ध्यति यत् अस्य भूयान् कालो मथुरावृन्दावने व्यतीत इति।

अस्य समयस्तु ई0 संवतोऽष्टादशशताब्द्याः उत्तरार्ध इति सुस्पष्टं ज्ञायते। यथोक्तम्-

साहित्यकौमुदी के रचयिता श्रीविद्याभूषण (1760 ई0 के लगभग) लिखते हैं।[2]

एकादशपरिच्छेदे परिशिष्टाऽलङ्कारविवेचने साहित्यदर्पणस्य यद्वा कुवलयानन्दस्य प्रत्यक्षतः प्रभावदर्शनात् अस्य समयनिर्धारणे कठिनता नास्ति। कुवलयानन्दकारोऽप्य-यदीक्षितः सप्तदशशताब्दीकः पण्डितराजजगन्नाथकालीन इति निश्चितम्। एवं तत्पश्चाद्वर्ति-त्वादस्य 1760 ई0 समयः उपयुक्त एवास्ति।

यद्यपि सरस्वतीभवनपुस्तकालयीयपाण्डुलिपिपरिचायिकायां प्राप्तेनास्य जीवनवृत्तान्तवर्णनेनास्यानेकग्रन्थकर्तृत्वं प्रतिपादितमस्ति, किन्तु कस्यापि ग्रन्थस्य नामनिर्देशस्तत्र नैव कृतोऽस्ति ऋते साहित्यकौमुदीम्। महामहोपाध्याय श्री पी.वी. काणे महोदयेन स्वकीये काव्यशास्त्रेतिहासग्रन्थे काव्यकौस्तुभ-नामकस्य विद्याभूषणविरचित-ग्रन्थस्य निर्देशः कृतोऽस्ति।

काव्यकौस्तुभ बलदेव विद्याभूषण
विद्याभूषणप्रभा साहित्यकौमुदीकाव्यप्रकाश

## साहित्यकौमुदी

साहित्यकौमुदी काव्यप्रकाशकारिकामादाय विरचितो वृत्तिग्रन्थोऽस्ति। यद्यपि ग्रन्थकारेण भरतसूत्रव्याख्यानम् इति प्रतिपरिच्छेदान्ते निर्दिष्टोऽस्ति तथापि न तत् सिद्ध्यतीति अग्रिमे प्रकरणे सप्रपञ्चं विवेचयिष्यते। ग्रन्थोऽयं सम्पूर्णानन्दसंस्कृत-विश्वविद्यालयीयसरस्वतीभवनपुस्तकालये पाण्डुलिपिरूपेण वर्तते। अस्य सं0 43415 इत्यस्ति। अस्य ग्रन्थस्य पाण्डुलिपिकालस्तु 1956 सं0 तत्राङ्कितोऽस्ति- लिपिकालः- 1956 आधारः - काव्यप्रकाशः - इति रूपेण। अस्य ग्रन्थस्य पाण्डुलिपिलेखनं तु गोपीनाथ कुकुडेमहोदयेन कृतमस्ति। यथान्ते-

श्री साहित्यकौमुद्यां परिशिष्टालङ्कारनिरूपणो नामैकादशः परिच्छेदः।। समाप्तश्चायं ग्रन्थः। वैशाख शुक्ल 1 बुधे संवत् 1956 गोपीनाथकुकडे। इति।

## साहित्यकौमुद्याः प्रतिपाद्यो विषयः

भावयित्रीभावनाभावितहृदयेन, आलोचनोपलोचनेन, काव्यसमालोचकेन तत्रभवता विद्याभूषणेन कृता साहित्यकौमुदी काव्यशास्त्रीयो ग्रन्थोऽस्ति। अस्य विभागो ग्रन्थकारेण परिच्छेदेषु कृतोऽस्ति। सम्पूर्णोऽयं ग्रन्थः एकादशपरिच्छेदेषु विभक्तोऽस्ति। अस्य प्रतिपाद्यविषयाणां परिच्छेदानुसारं परिचयः उपस्थाप्यते-

## प्रथमपरिच्छेदः

प्रथमपरिच्छेदे ग्रन्थस्यादौ विघ्नविघाताय ग्रन्थकारेण शिष्टपरम्परामनुपालयता वाग्देवतायाः कविभारत्याः नमस्कारात्मकं मङ्गलं कृतमस्ति। अत्र व्यतिरेकालङ्कारध्वनि-प्रतिपादनमुखेन कविभारतीनिर्माणप्रकारः ब्रह्मनिर्मितिप्रकारश्च प्रतिपादितोऽस्ति। नामात्मकं जगत्, रूपात्मकं जगत् च कथ्यते। ब्रह्मनिर्माणापेक्षया कविभारतीनिर्मितिरुत्कृष्टतरा भवतीति सिद्धान्तितमस्ति। मङ्गलानन्तरं काव्यप्रयोजन-प्रतिपादनमुखेन ग्रन्थस्यास्य प्रयोजनमुक्तम्, अस्यापि ग्रन्थस्य काव्याङ्गतया काव्यफलैरेव फलवत्वात्। यशःप्राप्तिः, अर्थप्राप्तिः, व्यवहारज्ञानम्, शिवेतरक्षतिः, सद्यः परनिर्वृतिः, कान्तासम्मिततयोपदेशश्चेति षट्सु काव्यप्रयोजनेषु सद्यः परमानन्दप्राप्तिरेव काव्यस्य परमं प्रयोजनं सकलप्रयोजनमौलि-भूतञ्चास्ति- इति सिद्धान्तितम्।

काव्यकारणेषु शक्तिनिपुणताभ्यासादीनां त्रयाणामपि दण्डचक्रचीवरादिन्यायेन समुदितकारणतां प्रतिपाद्य काव्ये केवला प्रतिभा कारणम् इति केषाञ्चिन्मतानामपि समर्थनं कृतमस्ति। ततश्च तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि इति काव्यस्वरूपं प्रतिपाद्य ध्वनिमादाय काव्यस्य भेदत्रयं प्रतिपादितम्- उत्तमम्, मध्यमम्, अवरञ्चेति। तत्र व्यङ्ग्यार्थप्राधान्ये ध्वनिकाव्यं नामोत्तमं काव्यमिति। व्यङ्ग्यार्थपेक्षया वाच्यार्थस्यैव चमत्कारितादशायां गुणीभूतव्यङ्ग्यं नाम मध्यमं काव्यमिति व्यङ्ग्यार्थस्याऽस्फुटत्वे अव्यङ्ग्यं नाम अवरं काव्यमिति एकैकमुदाहरणं दत्त्वा तेषां स्पष्टीकरणं कृतमस्ति। प्रत्येकमुदाहरणं कृष्णपरकमेवास्ति।

## द्वितीयपरिच्छेदः

'शब्दार्थौ काव्यम्' इति लक्षणानुसारं शब्दार्थयोः स्वरूपनिरूपणप्रस्तावे पूर्वं वाचक-लाक्षणिक- व्यञ्जकेति शब्दत्रैविध्यं प्रतिपाद्य वाच्य-लक्ष्य-व्यङ्ग्यार्थानां नामसङ्कीर्तनं कृतम्। ततश्चार्थभेदप्रस्तावे अभिहितान्वयवादिभिः मीमांसकैरभिमतायाः तात्पर्याख्यायाः वृत्तेः तत्प्रतिपादितस्य वाक्यार्थरूपस्य तात्पर्यार्थस्यापि विवेचनं कृतमस्ति।

वाच्य-लक्ष्य-व्यङ्ग्या इति त्रयोऽप्यर्थाः व्यञ्जका भवन्ति, एभिस्त्रिभिरपि परिस्थितिवशाद् व्यङ्ग्यार्थस्य प्रतीतिर्जायते- इति सोदाहरणं प्रदर्श्य शब्दस्वरूपप्रतिपादनार्थमर्थ-

प्रतिपादिकानाममिधा-लक्षणा-व्यञ्जनानां निरूपणं कृतमस्ति। तत्राभिधानिरूपणे शक्तिग्राहकानां व्यवहार- व्याकरणादीनाम्, सङ्केतस्थानानां जातिगुणक्रियाद्रव्यादीनां च विवेचनं कृत्वा सामान्येन शब्दस्य (वाचकस्य) भेदत्रयं प्रतिपादितम्- यौगिकः, रूढः, योगरूढश्चेति।

अभिधोपाधिकः शब्दो वाचकः इति वाचकशब्दस्वरूपं निरूप्य, लाक्षणिकं शब्दं निरूपयितुं लक्षणायाः स्वरूपं सोदाहरणं प्रदर्श्य नैयायिकमतानुसारं जहत्स्वार्था, अजहत्स्वार्था भागलक्षणेत्यादिलक्षणाभेदान् निरूप्य पुनश्च सूत्रानुसारं काव्यशास्त्रिभिरभिमतायाः उपादानलक्षणा-लक्षणलक्षणा-सारोपा-साध्यवसाना-शुद्धा-गौणी इति प्रयोजनवत्याः लक्षणायाः षड्भेदाः सोदाहरणं प्रदर्शिताः।

प्रयोजनवत्यां लक्षणायां प्रयोजनरूपार्थस्य प्रतीतिर्लक्षणया भवितुं नार्हति तदर्थं व्यञ्जनाऽवश्यमङ्गीकरणीयेति प्रतिपाद्येयमेव व्यञ्जना लक्षणामूलेति प्रदर्श्याभिधामूल-व्यञ्जना निरूपिता। इयं व्यञ्जना शाब्दी, आर्थी चेति द्विविधा। लक्षणामूला अभिधामूला चेत्युभयविधेअपि लक्षणे शाब्दी लक्षणेति प्रतिपाद्य शाब्दीव्यञ्जनायामर्थस्य आर्थीव्यञ्जनायां शब्दस्य च सहकारिता भवतीति निरूपितम्।

## तृतीयपरिच्छेद :

तृतीयः परिच्छेदो लघुतरोऽस्ति। अत्र केवलं आर्थी व्यञ्जना निरूपिताऽस्ति। अर्थव्यञ्जकतायां वक्तृ-बोधव्य-काकु-वाक्य-वाच्यान्यसन्निधि-प्रस्ताव देश-कालादयः सहयोगिनः सन्ति। एतेषां वैशिष्ट्यादेवार्थस्य व्यञ्जकता भवतीति क्रमशः एकैकशः सोदाहरणं निरूपितमस्ति। आर्थीव्यञ्जनायां शब्दसाहाय्यं भवत्येवेति प्रतिपाद्य तृतीयपरिच्छेदस्य समाप्तिः कृताऽस्ति।

## चतुर्थपरिच्छेदः

द्वितीयतृतीयपरिच्छेदयोः शब्दार्थयोः स्वरूपादिनिर्णये कृते दोषगुणालङ्काराणां कथने क्रमप्राप्तेऽपि धर्मिणो ज्ञानं विना धर्माणां ज्ञानं नैव भवितुमर्हतीति धर्मिणः काव्यस्य ज्ञानमुपस्थापयितुं काव्यभेदानुपस्थापयन् पूर्वं ध्वनिकाव्यमत्र प्रदर्शयति। ध्वनिस्तावद् द्विविधः अविवक्षितवाच्यः, विवक्षितान्यपरवाच्यश्चेति। अविवक्षितवाच्योऽपि अर्थान्तरसंङ्क्रमितवाच्यः, अत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः।

अविवक्षितवाच्यध्वनेः भेदद्वयमपि सोदाहरणं प्रदर्श्य विवक्षितान्यपरवाच्यध्वनौ प्रथमं तु असंल्लक्ष्यक्रमव्यङ्ग्यं निरूपयितुं रसस्वरूप-तन्निष्पत्तिप्रकारादिकं च निरूपितमस्ति। विभावादीनां स्वरूपस्य भेदानां च निरूपणं कृत्वा सोदाहरणं शृङ्गारादयो रसभेदाः प्रदर्शिताः सन्ति। ततश्च भाव-रसाभास-भावाभास- भावोदय-भावशान्ति-भावसन्धि-भावशबलतादयोऽपि निरूपिताः सन्ति।

संल्लक्ष्यक्रमव्यङ्ग्यो ध्वनिस्तावद् त्रिविधः शब्दशक्त्युद्भवः, अर्थशक्त्युद्भवः, उभयशक्त्युद्भवश्चेति। शब्दशक्त्युद्भवस्यापि द्वौ भेदौ- वस्तुध्वनिः अलङ्कारध्वनिश्चेति। अर्थशक्त्युद्भवस्यापि स्वतःसंभवी, कविप्रौढोक्तिसिद्धः, कविनिबद्धवक्तृप्रौढोक्तिसिद्धश्चेति त्रयो भेदाः, एतेषां त्रयाणामपि वस्त्वलङ्कारात्मना भेदद्वये कृते षड्भेदाः, प्रत्येकमपि क्वचिद् वस्तुनः क्वचिच्चालङ्कारस्य व्यङ्ग्यत्वात् द्वादशभेदा इति। उभयशक्त्युत्थस्तु एक एवेति सङ्कलनेन अष्टादशभेदाः ध्वनेरिति। ततोऽपि पदवाक्यप्रबन्धगता भेदाः रसध्वनेरपि पदपदांशवर्णरचनादिभेदाः प्रतिपादिता इति शुद्धध्वनेः एकपञ्चाशद्भेदाः तेषां परस्परसङ्करसंसृष्टिमहिम्ना शरेषुयुगखेन्दवः (10455) ध्वनिभेदाः सन्ति निरूपिता इति।

## पञ्चमपरिच्छेदः

पञ्चमपरिच्छेदोऽपि लघुतरोऽस्ति। अत्र गुणीभूतव्यङ्ग्यस्याष्टौ भेदाः सन्ति-अगूढम्, अपरस्याङ्गम्, वाच्यसिद्ध्यङ्गम्, अस्फुटम्, सन्दिग्धप्राधान्यम्, तुल्यप्राधान्यम्, काक्वाक्षिप्तम्, असुन्दरम् इति। एतेषां क्रमेण सोदाहरणं प्रतिपादनं कृतमस्ति। एषु गुणीभूतव्यङ्ग्येषु अपराङ्गव्यङ्ग्यं नाम गुणीभूतव्यङ्ग्यमेव रसवत्प्रेयोजस्विसमाहिता-लङ्काराणां कारणमित्यपि निरूपितम्। तत्र रसस्य रसाङ्गत्वे रसवत्, भावस्य भावाङ्गत्वे प्रेयः, आभासाङ्गत्वे ओजस्वि, प्रशमाङ्गत्वे समाहितमिति।

ध्वनिवद् गुणीभूतव्यङ्ग्यस्यापि भेदा भवितुमर्हन्ति तथा ध्वनिगुणीभूतव्यङ्ग्यभेदानां परस्परं सङ्करे संसृष्टौ च भेदसंख्यातिभूयसी स्यादिति भेदा न गणिताः।

## षष्ठपरिच्छेदः

प्रथमपरिच्छेदे एव चित्रकाव्यस्य स्वरूपं शब्दार्थगतत्वेन तद्भेदद्वयमपि निरूपितमस्ति पुनः षष्ठपरिच्छेदस्य काऽवश्यकतेत्यस्य सङ्गतिः कृताऽस्ति यत् अथ शब्दार्थचित्रयोरेकत्रैव गुणप्रधानभावेन स्थितिरिति। शब्दार्थालङ्कारौ द्वावपि स्वाभीष्टाविति च बोधयितुमारम्भः। इति। क्रमशः उदाहरणेन तत्स्पष्टीकरणमपि कृतम्।

## सप्तमपरिच्छेदः

प्रथमपरिच्छेदतः षष्ठपरिच्छेदं यावत् काव्यस्वरूप- शब्दार्थ-काव्यभेदादीनां विवेचनायां कृतायां क्रमप्राप्तं दोषनिरूपणं सप्तमे परिच्छेदे कृतमस्ति। सर्वप्रथमं दोषस्य लक्षणं प्रतिपाद्य सामान्यतया पददोषः, पदांशदोषः, वाक्यदोषः, अर्थदोषः, रसदोषश्चेति पञ्चभेदाः कृताः सन्ति। पददोषेषु षोडशभेदानां सोदाहरणं निरूपणं कृत्वा एष्वेव केचित् पदांशदोषा इत्युक्तम्, तेषामुदाहरणञ्च प्रदर्शितम्। ततः एकविंशति-वाक्यदोषाः त्रयोविंशतिसंख्याकाः अर्थदोषाश्च निरूपिताः।

दोषः कदा दोषो भवति स एव कदा गुणतां यातीत्यस्य निरूपणं कृत्वा त्रयोदशसंख्याकाः रसदोषाः निरूपिताः। ततश्च रसानां परस्परं विरोधमविरोधञ्च प्रदर्श्य रसदोषाणामपि कदाचिददोषत्वम्, कदाचिच्च गुणत्वमिति प्रदर्शितम्।

**अष्टमपरिच्छेदः**

अष्टमे परिच्छेदे काव्यगुणानां विवेचनमस्ति। गुणालङ्कारयोर्भेदं निरूप्य माधुयर्यौजः-प्रसादाख्यास्त्रयो गुणाः भवन्तीति प्रतिदापाद्यैकैकशस्तेषां स्वरूपं तथा कस्मिन् कस्मिन् रसे कस्य कस्य गुणस्य कथं स्थितिर्भवतीति युक्तिसङ्गतं प्रतिपाद्य प्राचीनैरुक्तानां दशशब्दगुणानां दशार्थगुणानां च तेषु त्रिष्वेव माधुर्यायादिष्वन्तर्भावो निरूपितः। ततश्च वर्णसमासरचनादीनां गुणव्यञ्जकतां प्रतिपाद्य गुणव्यञ्जका वर्णाः प्रतिपादिताः सन्ति। यद्यपि रसानुरूपं गुणविवेचनमस्ति वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित् अन्यथापि रचना भवतीति सोदाहरणं प्रदर्शितमस्ति।

**नवमपरिच्छेदः**

दोषगुणादीनां निर्णये कृते क्रमप्राप्ते अलङ्कारप्रस्तावे प्रस्तुतेऽस्मिन् नवमे परिच्छेदे शब्दालङ्कारा निरूपिताः सन्ति। शब्दालङ्कारास्ते सन्ति ये शब्दपरिवृत्तिं न सहन्ते। ग्रन्थकारानुसारम् -1- वक्रोक्तिः 2- अनुप्रासः 3- यमकम् 4- श्लेषः 5- चित्रम् 6- पुनरुक्तवदाभासः इति षट् शब्दालङ्काराः सन्ति। एतेषां भेदोपभेदादीनां सोदाहरणं व्याख्यानं कृतमस्ति।

अनुप्रासनिरूपणप्रसङ्ग एव उपनागरिका, परुषा, कोमला चेति तिस्रो वृत्तयोऽपि प्रतिपादिताः सन्ति। एता एव वृत्तयो वामनेन क्रमशो वैदर्भी, गौडी, पाञ्चालीति रीतयो मताः सन्तीति विवेचनमप्युपस्थापितमस्ति। श्लेषः शब्दालङ्कारो वा अर्थालङ्कारो वेति संक्षेपेण सयुक्तिकं विवेचितमस्ति। यत्र शब्दपरिवृत्तौ श्लेषत्वं भज्यते स शब्दश्लेषः (शब्दालङ्कार-विषयः) यत्र तु न भज्यते स पुनरर्थश्लेषः (अर्थालङ्कारविषयः) इति निर्णयः कृतोऽस्ति। चित्रालङ्कारवर्णने ग्रन्थकारेण विशेषरुचिः प्रदर्शिताऽस्ति।

**दशमपरिच्छेदः**

दशमे परिच्छेदेऽर्थालङ्काराणां निरूपणं कृतमस्ति। अर्थालङ्कारास्ते सन्ति यत्र शब्दपरिवर्तनेऽपि न चमत्कारक्षतिः। एतेषां संख्या षष्टिः (60) वर्तते। सर्वालङ्कारजीवातु-भूतोपमा प्रथमं निरूपिताऽस्ति। उपमायाः पूर्णा लुप्तेति पूर्वं भेदद्वयं कृतमस्ति। ततश्च पूर्णायाः षड्भेदाः, लुप्तायाः एकोनविंशतिरिति पञ्चविंशतिः उपमाभेदाः। यत्रासम्भाव्यस्यो-पमानस्य कल्पना क्रियते सा बिम्बानुबिम्बोपमा सैव चाभूतोपमेत्युक्ताऽस्ति। तथा च मालोपमा, रशनोपमा, एकदेशविवर्तिन्युपमा च प्रतिपादिताः सन्ति। अनन्वयः, उपमेयोपमा,

उत्प्रेक्षा च निरूपिताः सन्ति तेषूत्प्रेक्षायां विशेष उक्तो यद्- इयमुत्प्रेक्षा रूपकादेरलङ्कारान्तरस्य योगादतिचारुतां भजते।

ततश्च ससन्देह- रूपकापह्नुति- श्लेष-समासोक्ति-निदर्शनाऽप्रस्तुतप्रशंसाऽतिशयोक्ति-प्रतिवस्तूपमा-दृष्टान्त-दीपक-तुल्ययोगिता-व्यतिरेकाऽऽक्षेप-विभावना-विशेषोक्ति-यथासंख्याऽर्थान्तरन्यासविरोध-स्वभावोक्ति- व्याजस्तुति-सहोक्ति- विनोक्ति-परिवृत्ति-भाविक- काव्यालिङ्ग-पर्यायोक्तोदात्त-समुच्चय-पर्यायाऽनुमान- परिकर-व्याजोक्ति-परिसंख्या-कारणमालोत्तराऽन्योन्य- सूक्ष्म- सारासङ्गति- समाधि- सम- विषमाधिक- प्रत्यनीक-मीलितैकावली- स्मरण- भ्रान्तिमत्- प्रतीप- सामान्य- विशेष- तद्गुण- व्याघाताः इति अष्टपञ्चाशत् स्वतन्त्राः अलङ्कारास्तथा च परस्परसापेक्षनिरपेक्षभावेनैकत्रैकाधिकालङ्कारणां सद्भावे संसृष्टिसङ्करनामकौ द्वावप्यन्यौ अलङ्कारौ स्वीकृतौ स्तः। द्वयोरलङ्कारयोः संयोगे गङ्गायमुनासङ्गम इव चमत्काराधिक्यात् चमत्कारस्यैवालङ्कारत्वात्।

अन्ते च अलङ्कारदोषा निरूपिताः सन्ति। यद्यपि दोषनिरूपणं सप्तमे परिच्छेदे एव कृतमस्ति, तथापि अलङ्कारज्ञानं विना अलङ्कारदोषज्ञानस्य दुष्करत्वात् अलङ्काराणां निरूपणं कृत्वा पश्चादलङ्कारदोषाणामुद्भावना कृता यथासम्भवं तत्समाधानमपि प्रस्तावितमिति।

### एकादशपरिच्छेदः

एकादशपरिच्छेदस्य प्रारम्भे श्रीविद्याभूषणेन सर्वप्रथमं श्यामसुन्दरः स्मृतोऽस्ति। ततश्च भरतोक्तेभ्यः परिशिष्टाः केचन अलङ्काराः प्रदर्शिताः सन्ति। तत्र शब्दालङ्कारे एकविधैरेव शब्दैः विविधासु भाषासु यत्र वाक्यं स्यात् तत्र भाषासमालङ्कारो भवति। यत्र बिन्द्वादिप्रच्युतावपि विस्फुटमन्योऽर्थो प्रतीयते तत्र विन्दुच्युतादिकमिति। एवमेव च्युतदत्ताक्षरमपि भवति यत्र किञ्चिदक्षरं च्योतयित्वा किञ्चिद् दत्त्वा चान्यत्प्रकाश्यते। एवमेव क्रियागुप्तादिकं यत्र क्रियादीनां गोपनं स्यात्।

अर्थालङ्कारेषु उल्लेखः, निश्चयः, हेतुः, अनुकूलम्, विधिः, विचित्रम्, विकल्पः, अर्थापत्तिः, परिकराङ्कुरः, उपायः, मिथ्या (मिथ्याध्यवसितिः), परिणामः, अनुज्ञा तथा अनुगुणश्चेति सन्ति परिशिष्टा विवेचिताः। एवं सङ्कलनेन चत्वारः शब्दालङ्काराः चतुर्दशार्थालङ्काराः इत्यष्टादशपरिशिष्टालङ्कारत्वेनैकादशपरिच्छेदे विवेचिताः सन्तीति।

## साहित्यकौमुदी काव्यप्रकाशश्च

साहित्यकौमुदी स्वतन्त्रो ग्रन्थोऽस्ति काव्यप्रकाश-टीकाग्रन्थो वेति प्रायः सन्देहो जायते। साहित्यकौमुदी- काव्यप्रकाशयोरतिसाम्यदर्शनात्। काव्यप्रकाशस्य त्रयोंऽशाः सन्ति-1- सूत्राणि (कारिकाः) 2- वृत्तिः 3- उदाहरणानि चेति। साहित्यकौमुद्यामप्येते एवांशाः दरीदृश्यन्ते- सूत्राणि, वृत्तिः, उदाहरणानि चेति। काव्यप्रकाश- साहित्यकौमुद्याः

सूत्रेषु न कोऽपि भेदः। उदाहरणानि तु उभयत्रापि निश्चितमेवान्यकृतानि सन्ति। यतो हि यथा साहित्यदर्पणे आचार्येण विश्वनाथेन 'इदं मम' 'इदं मम तातपादान्नाम्' इति सङ्केतितम्, यथा वा पण्डितराजजगन्नाथेन-

**निर्माय नूतनमुदाहरणानुरूपं**

**काव्यं मयाऽत्र निहितं न परस्य किञ्चित्।**

इति डिण्डिमघोषेनोद्घोषितं स्वग्रन्थस्योदाहरणानां स्वनिर्मितत्वम्, न तथाऽत्र काव्यप्रकाशे साहित्यकौमुद्यां वा दृश्यते। वृत्तिभागे तु भिन्नताप्यस्ति, साम्यमपि। एवञ्च ग्रन्थोऽयं साहित्यकौमुदी काव्यप्रकाशस्य टीकेति वस्तुतः प्रतीयते।

साहित्यकौमुदीकारेण तु प्रत्येकस्य परिच्छेदस्यान्ते इति भरतसूत्रवृत्तौ साहित्यकौमुद्यां .........नाम..........परिच्छेदः, इत्युक्तमस्ति। यथोदाहरणार्थं प्रथमपरिच्छेदस्यान्ते- इति भरतसूत्रवृत्तौ साहित्यकौमुद्यां काव्यप्रयोजनहेतुस्वरूपविशेषनिर्णयो नाम प्रथमः परिच्छेदः इति। एवञ्च साहित्यकौमुदी भरतसूत्राणां वृत्तिरिति सिद्ध्यति।

साहित्यकौमुद्यां यानि सूत्राणि दृश्यन्ते तान्येव काव्यप्रकाशेऽपीति महान् संशयो जायते यत् साहित्यकौमुद्यां विद्याभूषणेनान्यतो गृहीतानि सूत्राणि काव्यप्रकाशस्य सन्ति भरतकृतानि वेति। यदि साहित्यकौमुदीसूत्राणि भरतकृतानि सन्ति तर्हि काव्यप्रकाशस्यापि सूत्राणि भरतकृतान्येव, उभयोः साम्यदर्शनात्; किन्तु काव्यप्रकाशे सूत्राणां भरतकर्तृत्वं कुत्रापि तथा न स्वीकृतं यथाऽत्र साहित्यकौमुद्यामिति काव्यप्रकाश-भरतयोरेव सम्बन्धः पूर्वं प्रतिपाद्य इति तदेव विचार्यते-

## काव्यप्रकाशो भरतश्च

वाग्देवतावतारेण काव्यशास्त्रविशारदेन आचार्येण मम्मटेन विरचितः काव्यप्रकाशः, काव्यशास्त्रस्यान्यतमो मुख्यतमश्च ग्रन्थोऽस्ति। काव्यशास्त्रग्रन्थपरम्परानुरूपमत्र त्रयोंऽशाः सन्ति-1- कारिका (सूत्राणि वा) 2. वृत्तिः (सूत्रव्याख्या) 3. उदाहरणञ्चेति। उदाहरणानि तु विषयप्रतिपादनार्थं हस्तामलकवत् विषयोपस्थापनायावश्यकानि भवन्ति। कारिकाः (सूत्राणि वा) संक्षेपेण सिद्धान्तभूताः विषयाः ग्रन्थप्रतिपाद्याः भवन्ति। वृत्तिस्तु-

**अल्पाक्षरमसन्दिग्धं सारवद् विश्वतो मुखम्।**

**स्तोकमनवद्यं च सूत्रं सूत्रकृतो विदुः॥**[3]

इति लक्षणलक्षितानामल्पाक्षरात्मकानां सूत्राणां सर्वगम्यं सरलं विस्तृतं व्याख्यानमिति।

क्वचित् केचिद् विद्वान्सः कारिकारूपेण सूत्ररूपेण वा सिद्धान्तानां स्थापनां कुर्वन्ति, अपरे च तद्वृत्तिरूपेण व्याख्यां सम्पादयन्ति, इतरे उदाहरणप्रदर्शनेन तत्सङ्घटनं सुस्पष्टं तत्प्रतिपादनं च कुर्वन्ति। क्वचित् एक एव कश्चित् सूत्रं तद्व्याख्यानं च करोति,

क्वचिच्च एक एव सूत्र-वृत्ति-तदुदाहरणादिकं च सर्वमेव करोति, यथा-पण्डितराजजगन्नाथः। रसगङ्गाधरे कारिकाः, तद्वृत्तिः, उदाहरणं च सर्वमेव तेनैव कृतमस्ति। यथा-

**निर्माण नूतनमुदाहरणानुरूपं**
**काव्यं मयात्र निहितं न परस्य किञ्चित्।**

इति स्वयमेव तेनोक्तमस्ति । अत्र काव्यप्रकाशेऽपि त्रयोंऽशाः एकेनैव (मम्मटेनैव) कृताः सन्ति, पृथक्पृथग्जनैर्वेति विचारणीयम्।

उदाहरणानि तु निश्चितमेवान्यान्यैः कृतानि सन्ति। यथा मधुकरो नानापुष्पेभ्यो रसमानीय मधु करोति तथैव पृथक् पृथग्ग्रन्थैः गृहीतैः श्लोकैः मम्मटेनोदाहरणानि प्रदर्शितानि सन्ति काव्यप्रकाशे- इति विषये नास्ति कश्चित् सन्देहो विवादो वा कस्यचित्, किन्तु सूत्रवृत्त्योः एककर्तृत्वे महान् विवादो दृश्यते। स च विवादः एवमस्ति-काव्यप्रकाशस्थकारिकाः भरतमुनिकृताः, तद्वृत्तिभागस्तु मम्मटकृत इति।

काव्यप्रकाशे 142 कारिकाः, सूत्राणि तु 212 सन्ति। काव्यप्रकाशस्य कारिकाः सूत्ररूपेण भीमसेन- वैद्यनाथ-गोविन्द-ठक्कुरादिभिः अनेकैः व्याख्याकारैः उल्लिखिताः सन्ति। काव्यप्रकाशे सिद्धान्ताः कारिकारूपेणोल्लिखिताः सन्ति सूत्ररूपेणेत्यन्य एव विषयः। कारिकाः वा भवन्तु सूत्राणि वा तद्विद्याभूषणेन मुख्यतो विवादोऽयमुपस्थापितोऽस्ति। यद्यपि तेनेदमुक्तमस्ति यत्- भरतमुनिवर्णितानां सूत्राणां संक्षेपेणात्र वृत्तिः कृतास्ति-

**सूत्राणां भरतमुनीशवर्णितानाम्**
**वृत्तीनां मितवपुषां कृतौ ममास्याम्।**

इति लिखितमस्ति, तथापि येषां सूत्राणां व्याख्यानं साहित्यकौमुद्यां विद्याभूषणेन कृतमस्ति तान्येव सूत्राणि काव्यप्रकाशेऽपि दरीदृश्यन्त इति साहित्यकौमुदी-काव्यप्रकाशसूत्रसमानता काव्यप्रकाशसूत्राणामपि भरतमुनिकर्तृत्वं संसाधयति। एवं सूत्राणि मम्मटकृतानि न सन्ति, अपि तु भरतकृतानीति विद्याभूषणमतमस्ति।

महेश्वरभट्टेनापि काव्यप्रकाशकारिकाकर्ता भरतः इति स्वीकृतमस्ति। तिलकरचयिता जयरामोऽपि तमेव समर्थयति।[4] सूत्राणां भरतकर्तृत्वसंसाधकानामधोलिखिताः तर्काः सन्ति-

1- काव्यप्रकाशे वर्णिताः काश्चित् कारिकाः भरतनाट्यशास्त्रकारिका इव सन्ति। यथा रससंख्याविषये-

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।**
**बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः।।[5]**

स्थायिभावविषये-

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।**
**जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्त्तिताः।।[6]**

व्यभिचारिभावविषये-

**निर्वेदग्लानिशङ्काख्यास्तथाऽ सूयामदश्रमाः।**
**..................................................................**
**................................... विज्ञेया व्यभिचारिणः।**
**त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः।।[7]**

इति कारिकाः भरतकृतनाट्यशास्त्रस्य षष्ठेऽध्याये 15,17, तथा 18-21 कारिकासु यथावद् दृश्यन्ते।

2- काव्यप्रकाशस्यारम्भे नियतिकृतनियतरहिताम् इत्यादिमङ्गलश्लोकस्यावतरणिकायां (वृत्तिग्रन्थे) मङ्गलश्लोककारस्य विषये मम्मटेनान्यपुरुषस्य प्रयोगः कृतः- ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत् परामृशति- इति। अत्र ग्रन्थकृदित्यन्यपुरुषप्रयोगः कारिकाकार-वृत्तिकारयोः भेदमुपस्थापयति।

3- काव्यप्रकाशे कारिकायां वृत्तौ च क्वचिन्मतभेदोऽपि दृश्यते। उदाहरणार्थं यथा- रूपकालङ्कारविवेचने समस्त-वस्तुविषयम् एकदेशविवर्ति चेति भेदद्वयं कृत्वा समस्तवस्तुविषयरूपकस्य लक्षणे कारिकायाम्-

**समस्तवस्तुविषयं श्रौता आरोपिता यदा।[8]**

इत्युक्तमस्ति, किन्तु वृत्तौ तु आरोपिताः श्रौताः इति बहुवचनं विवक्षितं नास्ति अर्थात् अनेकेषु आरोप्यमाणेषु शब्दोपात्तेषु सत्स्वेव समस्तवस्तुविषयं रूपकं भविष्यतीति नायं नियमः, अपितु एकस्मिन्नपि आरोप्यमाणे शब्दोपात्ते सति समस्तवस्तुविषयं रूपकं भविष्यतीति प्रतिपाद्य एकस्यैव आरोप्यमाणस्य शब्दोपात्तस्योदाहरणे-

**ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-**
**न्यन्तर्द्धानव्यसनरसिका रात्रिकापालिकीयम् ।**
**द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले**
**न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य छलेन।।**

इति। एवं कारिकायां बहुवचनमुक्तम्, वृत्तौ तु बहुवचनं खण्डितम्-

**आरोपिता इति बहुवचनमविवक्षितम्।[9]**

भरतमुनेः कारिकाकारत्वं प्रतिपादयतां विदुषां पूर्वोक्तानां युक्तितर्काणां कृतायां विवेचनायामेते तर्काः युक्तिसङ्गताः न प्रतीयन्ते-

1- पूर्वोक्तः प्रथमस्तर्कस्तु न युक्तियुक्तः, यतो हि काव्यप्रकाशीयासु 142 कारिकासु काश्चन द्वित्रा एव कारिकाः एवं सन्ति या भरतनाट्यशास्त्रे दृश्यन्ते ता अपि केवलं रसविवेचनविषये एव। आचार्यमम्मटस्य समये रसनिष्पत्तिविषये महामुनेः भरतस्य विशिष्टतमं स्थानमासीत्। अतएव भरतं प्रमाणं मत्वा रसनिष्पत्तौ (रसविवेचने) भरतशब्दा एव मम्मटेन प्रयुक्ताः।

नहि केवलं भरतशब्दानामेव प्रयोगः काव्यप्रकाशे दृश्यते, अपि तु अन्येषामप्याचार्याणां शब्दाः मम्मटेन गृहीताः सन्ति।[10] काव्यालङ्कारसूत्रवृत्तौ वामनोक्ता-

**कर्णावतंसश्रवणकुण्डलशिरः शेखरेषु कर्णादिनिर्देशः सन्निधेः।**[11]

इति कारिका तथैव काव्यप्रकाशकारेणापि गृहीता-

**कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितः।**
**संनिधानादिबोधार्थम् .......................।।**[12]

एवं वामनेन यदुदाहृतमस्ति तदेव काव्यप्रकाशे मम्मटेन सूत्रं कृतमस्ति। (किञ्च यदि सूत्राणि भरतकृतानि तर्हि वामनोदाहृतमिदमपि भरतकृतमेव स्यात्।) एवमेव काव्यप्रकाशस्य गुणस्वरूपप्रतिपादिका-

**ये रसस्याङ्गिनो धर्माः............**

इत्यादिकारिका तथा अलङ्कारस्वरूपप्रतिपादिका-

**उपकुर्वन्ति तं सन्तम्...............**

इत्यादिकारिका च आचार्येणानन्दवर्धनेन ध्वन्यालोके-

**तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।**
**अङ्गाश्रितास्त्वलङ्काराः मन्तव्याः कटकादिवत्।।**

इति कारिकायाश्छायामात्रे एव स्त इति नास्ति सन्देहः।

अतः काव्यप्रकाशेऽन्येषामपि अनेकेषामाचार्याणां शब्दभावकारिकादिग्रहणचतुरेण मम्मटेन भरतकारिका अपि द्वित्रा गृहीता इति नाश्चर्यम्, न च तथा काव्यप्रकाशकारिकानां कर्तृत्वेन भरतस्य ग्रहणमुचितमिति प्रतिभाति।

2- द्वितीयोऽपि तर्को न न्यायसङ्गतः, प्राचीनटीकाकारैः ग्रन्थकारैर्वा बहुभिः आत्मनो विषये अन्यपुरुषस्य प्रयोगात्। उदाहणार्थं साहित्यदर्पण एव प्रस्तूयते। तत्र विश्वनाथेनात्मनः कृतेऽन्यपुरुषस्य प्रयोगः कृतोऽस्ति

ग्रन्थारम्भे .........वाङ्मयाधिकृततया वाग्देवतायाः साम्मुख्यमाधत्ते।

इति नान्यपुरुषप्रयोगः सूत्रवृत्तिकारयोः भेदमुपस्थापयितुं सक्षमः।

3- तृतीयोऽपि तर्कः तथा प्रबलो नास्ति यथा काव्यप्रकाशकारिकानां कर्तृत्त्वेन भरतं संसाधयेत् यतो हि पूर्वं सर्वं बहुवचनमुक्त्वाऽपि पुनः वृत्तौ बहुवचनखण्डनमेकेनापि कर्तुं शक्यते यथा समाजे कस्यचित् कार्यस्योपायं प्रतिपादयन् कश्चित् कमप्युपायविशेषं पूर्वं कथयति पश्चाच्च अथवा एवं भवतु इति उक्त्वा पूर्वकथनं स्वयमेव खण्डयति- इति तन्न किमपि।

किञ्चैतदतिरिक्तान्यन्यान्यपि प्रमाणानि सन्ति यैः काव्यप्रकाशस्य कारिकावृत्त्योः एककर्तृत्वं प्रतिपादयितुं शक्यते। तानि यथा-

1- यथा साहित्यकौमुद्यां सूत्रकारत्वेन भरतमुनेः वर्णनं कृतमस्ति, न तथा काव्यप्रकाशे कुत्रापि सूत्रकारत्वेनान्यस्य कस्यचित्कथमपि (प्रत्यक्षमप्रत्यक्षं वा) निर्देशोऽस्ति। किञ्च तत्र नियतिनियमरहिताम् इत्यादेः भिन्नः कश्चनापरो मङ्गलश्लोक एव दृश्यते। यदि तत्र सूत्रवृत्तिकारयोः भेदः स्यात् तदा शिष्टपरम्परानुसारमुभाभ्यामपि पृथक्-पृथक् कृतं मङ्गलद्वयं स्यात्। न चास्ति तथा- इति न सूत्रवृत्तिकारयोर्भेद[13] इति।

2- काव्यप्रकाशे रसविवेचनप्रकरणे उक्तायाम्-

**कारणान्यथ कार्याणि................**

इत्यादिकारिकायाम् वृत्तौ-इति लिखितमस्ति। यदि कारिकाः भरतकृताः स्युस्तदा उक्तं हि भरतेन इति स्थाने तदुक्तमनेनैवान्यत्र इति वाक्यं स्यात्। किञ्च भरतोक्तौ भरतस्यैवोक्तेः प्रामाण्यं न स्यादिति मम्मट एव सूत्रकारः, वृत्तिकारश्च।

3- काव्यप्रकाशस्य प्राचीनटीकाकारैः माणिक्यचन्द्रजयन्तभट्ट-सरस्वतीतीर्थ-सोमेश्वरादिभिः कारिकावृत्तिकारयोर्भेदो नैव प्रतिपादित इति अपितु प्राचीनाः अर्वाचीनाश्च टीकाकारास्तदेककर्तृत्वसमर्थका एव सन्ति। यैस्तु जयरामादिभिः पूर्वं प्रतिपादितो भेदस्तैरपि पश्चादेककर्तृत्वमेव स्वीकृतमिति महामहोपाध्यायाः पी0वी0 काणे महोदयास्तत्र सन्ति प्रमाणमिति।

4- आचार्येण हेमचन्द्रेण काव्यानुशासने काव्यप्रयोजनं प्रतिपादयता एवमानन्दयशश्चतुर्वर्गोपायव्युत्पत्तीनां काव्यप्रयोजनतामसाधारणीं प्रतिपाद्य यत्कैश्चित् श्रीहर्षदेर्धावकादीनामिव धनम् ........ अनर्थनिवारणं प्रयोजनत्रयमुपन्यस्तम् इत्युक्त्वा काव्यप्रकाशस्य कारिकावृत्तिकारयोरर्भेद एव प्रतिपादितः, न तु भेदः।

किञ्च तेनैवान्यत्र- अगूढमपरस्याङ्गम् इत्यादिकारिकाकारत्वेन मम्मटः नामतः प्रतिपादितोऽस्ति- यथाह मम्मटः अगूढमपरस्याङ्ग इत्यादि[14]।

हेमचन्द्रो मम्मटस्य समकालीनोऽस्ति। कारिकाकाररूपेण हेमचन्द्रकृतं मम्मटस्य स्थापनं कारिकावृत्तिकारयोरैक्ये प्रबलतरं प्रमाणमस्ति।

5- अलङ्कारसर्वस्वटीकाकारजयरथेनापि कारिकावृत्तिकारयोरभेदरूपेण मम्मटे निर्दिष्टोऽस्ति- काव्यप्रकाशकृदितिरूपेण। एवमेव प्रतापरुद्रयशोभूषणे विद्यानाथेन,

उत्प्रेक्षाऽलङ्कारप्रसङ्गे चित्रमीमांसायामप्ययदीक्षितेन, रसगङ्गाधरे पण्डितराजजगन्नाथेन, अन्यै टीकाकारैः भीमसेन- गोपालभट्ट-कमलाकरभट्टादिभिश्च काव्यप्रकाशस्य कारिकावृत्तिकारयोः भेदो नैव प्रतिपादितोऽस्ति, अपि तु साक्षान्मुखेनाभेदः प्रतिपादित इति।

एवमङ्गुलिगणनीयाः काश्चन कारिकाः विहाय सर्वासां कारिकानां तद्वृत्तिभागानां च रचयिता केवलं मम्मट एवेति निष्कर्षः। अतएव साहित्यकौमुद्यामपि विवेचितानि सूत्राणि न भरतकृतानि, अपि तु मम्मटकृतान्येवेति मम बुद्धौ प्रतिभाति।

ननु यदि सूत्राणि मम्मटकृतानि तर्हि साहित्यकौमुद्यां तद्भरतकर्तृत्वं कथमुद्घोषितम्? इति चेत् तदोच्यते- सूत्राणां भरतोक्तत्वं प्रतिपाद्य तन्महत्त्वमेव प्रतिपादितम्, मम्मटापेक्षया भरतस्य समधिकसम्मानात्। यदि सूत्राणि भरतकृतानि स्युस्तदा नाट्यशास्त्रिषु यथा काव्यशास्त्रकारेष्वपि भरतस्य प्रथमं गणना स्यात्। किञ्च यमकोपमादीनां पञ्चषामलङ्कारत्व-प्रतिपादकस्य भरतस्य षण्णां शब्दालङ्काराणाम्, एकषष्टिसंख्याकानामर्थालङ्काराणां च प्रतिपादनमसङ्गतं स्यात्। अलङ्कारसंख्यायां क्रमिकविकासस्य दर्शनात्।

एवं सत्यपि काव्यप्रकाशे काऽऽवश्यकता साहित्यकौमुद्याः? इत्युच्यते-काव्यप्रकाशे व्याख्यानमतीव दुरूहमस्ति, सर्वजनगम्यं नास्ति, अत्र तु सरलया गिरा दर्शनान्तरादीनां शास्त्रार्थं विवादादिकं च विहाय सामान्यरूपेण सर्वबोधगम्यं व्याख्यानोपस्थापनमेवास्य निर्माणे कारणमिति।

साहित्यकौमुदीकारेण क्वचित् काव्यप्रकाशाद्भिन्नानामपि सिद्धान्तानां प्रतिपादनं कृतमस्ति। यथा-

1- काव्यकारणतायां मम्मटः शक्तिनिपुणताऽभ्यासानां त्रयाणामपि दण्डचक्रचीवरा-दिन्यायेन समुदितकारणतामङ्गीकरोति- हेतुर्न तु हेतवः इति। किन्तु साहित्यकौमुद्यां विद्याभूषणेन तु कारिकानुसारं त्रयाणां समुदितानां कारणतां प्रतिपाद्य केवलायाः प्रतिभाया अपि कारणताऽन्यप्रतिपादिताऽऽङ्गीकृताऽस्ति।

**....... इति त्रिकं समुदितमेव हेतुरित्येके। डिम्भेनापि काव्योत्पादनाच्छक्ति-रेव केवलेत्यपरे।**[15]

2- रसविवेचने रसानां नवसंख्या साहित्यकौमुदीकारस्य श्रीविद्याभूषणस्याभीष्टं नास्ति। तेन तु शृङ्गारहास्यकरुणरौद्रवीरभयानकाद्भुतबीभत्सशान्तरसेभ्योऽतिरिक्ताः दास्य-सख्य-वात्सल्याख्यास्त्रयोऽन्येऽपि रसाः स्वीकृताः सन्ति-

ननु दास्यसख्यवात्सल्याख्यास्त्रयो रसाः परे सन्त्यनुभूयन्ते च तत् कथमत्र नवैवेति चेत्, सत्यम् तथापि नात्र ते निरूप्यन्ते। नवैव रसाः परे तु भावाः इति स्वेच्छयैव मुनिना परिभाषणात्।[16]

एवं ग्रन्थोऽयं साहित्यकौमुदी काव्यप्रकाशकारिकाव्याख्यानात्मकोऽस्तीति मदीयः पक्षः।

## सन्दर्भ-सूची

1. साहित्यकौमुदी, पाण्डुलिपि परिचायिका.
2. आचार्यमम्मट, पृ0-50, प्रो. धुंडिराजगोपालसप्रे.
3. काव्यमीमांसा.
4. महेश्वर (Jiwanand's edition P. 3) Says भरत is the author of the कारिका in the काव्यप्रकाश, जयराम in his तिलक first puts forward the view that भरत is the author of the कारिका।
5. काव्यप्रकाशः - 4/29.
6. काव्यप्रकाशः - 4/30.
7. काव्यप्रकाशः - 4/31-34.
8. काव्यप्रकाशः - 10/93.
9. काव्यप्रकाशः, रूपकालङ्कारे.
10. For want of space it is not possible to get out in ditail all the authors and works from which quotations are taken, the followings are mentioned by name आचार्याभिनवगुप्त, कालिदास, कामशास्त्र, उद्भट, ध्वनिकार or ध्वनिकृत्, बाण, भट्टनायक, भरत, महाभाष्यकार, मयूर, रुद्रट, लोल्लट, वाक्यपदीय, शङ्कुक, श्रीहर्ष, among those which or not named are following. The work of कालिदास and भवभूति, अमरुशतक, कर्पूरमञ्जरी, कुट्टनीमत, चण्डीशतक, नवसाहसाङ्कचरित, नागानन्द, बालरामायण, भट्टि, भर्तृहरि, भल्लट, भामह भास, माघ, रत्नावली, राघवानन्द, विज्जका, विद्धशालभञ्जिका, विष्णुपुराण, वेणीसंहार, हयग्रीववध, हरविजय, (History of Sans] Poetics] by P.V. Kane P. 256.)
11. का0सू0 वृ0- 2/2/14.
12. काव्यप्रकाशः - सू0 77.
13. जयराम in his तिलक first puts forward the view that भरत is the author of the कारिका and then comes to the condission that the author of the कारिका and of the वृत्ति is the same (videpetirson's 2nd Report P. 107).
(History of Sans. Poetics, by P.V. Kane P. 257).
14. पृ. 109.
15. साहित्यकौमुदी परि0- 1, काव्यकारणता.
16. साहित्यकौमुदी परि0- 4, रसविवेचनम्



## प्रथमोऽध्यायः

# काव्यप्रयोजनम्, काव्यकारणम्, काव्यस्वरूपम्

### काव्यप्रयोजनम्

अपारेऽस्मिन् संसारे जायमानानि निखिलान्येव कार्यजातानि विज्ञैरज्ञैर्वा सम्पादितानि सप्रयोजनान्येव सन्ति। अतएव प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते, इति वदन्तोऽभिज्ञाः दृश्यन्ते, एवं हि विविधविधशास्त्ररविकरनिकरोत्पादितातुलहृदयगुफातलविराजिताज्ञानान्धकारततिभिः सुमतिभिः कवयः किन्न पश्यन्ति इत्यभिजनोक्तिदिशा सर्वं प्रत्यक्षाप्रत्यक्षं हस्तामलकवत् प्रत्यक्षीकुर्वद्भिः महाकविभिः कृतानि, मोक्षसोपानपरम्परायमानानि ब्रह्मास्वादसहोदरीभूतरसैकजीवितानि, काव्यभावनापरिपक्वहृदयैः सहृदयैरभिनन्दितानि काव्यानि, महाकाव्यानि, दृश्यकाव्यानि किं वा सकलान्येव काव्यसमालोचनपराणि काव्याङ्गभूतानि अलङ्कारशास्त्राणि सप्रयोजनानि सन्तीति कः खलु सशंयीत। अत एवोक्तम्-

**सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते।**
**शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः।।**[1]

प्रायः सर्वैरेव भावयित्रीभावनाभावितहृदयैः मानकैः काव्यालोचनपरैः काव्यशास्त्रिभिः स्वकीयेषु काव्यशास्त्रग्रन्थेषु यथाशक्ति काव्यप्रयोजनविषये विचाराः समुपस्थापिताः सन्ति। प्रकृते ह्यस्मिन् अस्माभिः ससमीक्षं सम्पादनीये, विद्वन्मण्डलशिरोभूषणेन महाकविना विद्याभूषणेन विरचिते, काव्यशास्त्रालङ्कारभूते काव्यज्ञनेत्रकौमुदीस्वरूपे साहित्यकौमुदीनामके ग्रन्थेऽपि काव्यस्य प्रयोजनानि सविस्तरं प्रतिपादितानि सन्ति। अत्र साहित्यकौमुद्यां काव्यस्य तान्येव प्रयोजनानि प्रतिपादितानि सन्ति यानि कारिकाकारेण कारिकायां वर्णितानि सन्ति -

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।**
**सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे।।**[2]

अस्यां कारिकायां काव्यस्य षट् प्रयोजनानि प्रतिपादितानि सन्ति-

1 - काव्यं यशसे।

2 - काव्यम् अर्थकृते।

3- काव्यं व्यवहारविदे।

4- काव्यं शिवेतरक्षतये।

5- काव्यं सद्यः परनिर्वृतये।

6- काव्यं कान्तासम्मिततयोपदेशयुजे।

एतानि प्रयोजनानि साहित्यकौमुदीकारेणापि समर्थितानि कारिकायाः वृत्तिं सम्पादयता-

कीर्तिर्धनप्राप्तिर्देवमनुष्यादिव्यवहारावगतिर्देवतावन्दनकृतः क्लेशनाशः सपद्येव रसानुभवसमुद्भूतः परमानन्दः सरसतया धर्मादिरूपहितोपदेशश्च काव्यादेव भवतीति सर्वथा तत्र प्रयतनीयम्।[3]

**यशःप्राप्तिः**

यशःप्राप्तिः मनुष्यजीवनस्य प्रमुखं तत्त्वमस्ति। सर्वे जनाः यशःप्राप्त्यर्थं सर्वथा वाञ्छन्ति। यशसा प्रीतिः अयशसा च दुःखं प्रायः सर्वेषां भवति। अतः कवयोऽपि काव्यद्वारा यशःप्राप्त्यर्थं प्रयतन्ते प्राप्नुवन्ति चेति, यशःप्राप्तिः काव्यस्यान्यतमं प्रयोजनमस्ति।

**अर्थप्राप्तिः**

मनुष्यजीवनस्य सर्वाण्येव कार्याणि धनेनैव प्रचलन्ति। धनं विना जीवनस्य दैनन्दिनात्मकान्यावश्यकानि कार्याणि यथाऽवरुद्धानि भवन्ति तथैव धार्मिकाणि कार्याण्यपि धनं विना नैव भवितुमर्हन्ति- इति धनस्यावश्यकतां स्मारं स्मारं काव्यशास्त्रिभिः काव्यस्य प्रयोजने अर्थप्राप्तिरपि गणिताऽस्ति। यद्यपि काव्यनिर्माणस्य प्रारम्भिके काले कविः नैव चिन्तयति यदनेन धनप्राप्तिर्भविष्यति किन्तु गते काले काव्यस्य तस्य महत्त्वं दर्शं दर्शं प्रकाशने जाते सति काव्येन धनप्राप्तिरपि भवति।

**व्यवहारज्ञानम्**

मनुष्योऽस्त्येकः सामाजिकः प्राणी। समाजे परस्परमुचितस्य व्यवहारस्य महन्महत्त्वं भवति। केन सह कथं व्यवहर्त्तव्यम्, राज्ञः प्रजाभिः सह, प्रजानां नृपैः सह, भ्रातुः भ्रातृणा, पुत्रस्य पितरं प्रति, पित्रोः पुत्रं प्रति कथं व्यवहारो भवेदित्यस्य समुचितं ज्ञानं काव्याद्भवति। अतो व्यवहारज्ञानमपि काव्यप्रयोजनेषु निबद्धमस्ति।

**शिवेतरक्षति :**

शिवः कल्याणम्, तदितरोऽमङ्गलम्, तस्यामङ्गलस्य विनाशः काव्याज्जायते। सत्यं शिवं सुन्दरम् इति भारतीयायाः संस्कृतेः मूलं तत्त्वं काव्यात् सिद्ध्यति। यतो हि काव्यस्य सकलमेव रूपं सत्यं शिवं सुन्दरम् इत्यस्यैव भित्तेराधारितं भवति। अतोऽन्योपायाक्षेपया काव्यममङ्गलनिवारणे समधिकं सफलं भवति- इति शिवेतरक्षतिः काव्यस्य प्रयोजनमिति।

**सद्यः परनिर्वृतिः**

निर्वृतिः आनन्दः, परा चासौ निवृतिः परनिर्वृतिः परमानन्द इति। सद्यस्तत्कालमतिशीघ्रतया परनिर्वृतेः परमानन्दस्य प्राप्तिः काव्याद् भवतीति। काव्यमेकं वाङ्मयेषु विलक्षणमेव वैदिकसाहित्यात्, पुराणादिभ्यश्चेति। यतो ह्यत्र न तु शब्दस्य न वा अर्थस्यैव प्राधान्यं भवति, अपि तु शब्दोऽर्थश्चेति गौणौ भवतः, व्यञ्जनायाश्च भवति प्राधान्यम्। अतो व्यञ्जनायाः साहाय्येन काव्यपठनश्रवणसमकालमेव परमानन्दस्यानुभूतिर्जायते काव्यभावनापरिपक्वहृदयानां सहृदयानां हृदये। काव्यस्येदं प्रयोजनं सकलप्रयोजनमौलिभूतमस्ति। यथोक्तं काव्यप्रकाशकारेण-

सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादसमुद्भूतं विगलितवेद्यान्तरमानन्दम्[4]

**कान्तासम्मिततयोपदेशः**

कर्त्तव्ये प्रवृत्तिः, अकर्तव्यान्निवृत्तिश्चेति विज्ञानां सदुपदेशैरेव ज्ञायते। उपदेशाश्च प्रभुभिः, मित्रैः, कान्तया च पृथक् पृथक्क्रियन्ते। अतः उपदेशात्मकानि वाक्यान्यपि प्रभुभिः सम्मितानि, सुहृद्भिः सम्मितानि, कान्तया च सम्मितानीति भवन्ति। तेषु प्रभुसम्मितं वाक्यं वेदादि। सुहृत्सम्मितं पुराणादि। कान्तासम्मितं काव्यमिति वाक्यवर्गीकरणम्। काव्यस्य कान्तया तुलनायाः इदमेव कारणं यत् यथा कान्ता हावभावकटाक्षैः पूर्वं पुरुषं सरसं विधाय किञ्चिद् विचारितं पुरुषसमक्षमुपस्थापयति, पुरुषस्य पूर्णसम्मतिं प्राप्नोति तथैव काव्यमपि सरसतया सहृदयान् स्वाभिमुखीकृत्य, रामादिवद् वर्तितव्यं न रावणादिवद् इति कृत्याकृत्त्यप्रवृत्तिनिवृत्त्युपदेशं करोति। सफलतां च प्राप्नोति नायिकावदिति कान्तासम्मिततयोपदेशः काव्यस्यान्यतमेन प्रयोजनेन रूपेणाङ्गीकृतमस्ति।

एतेषु षट्सु प्रयोजनेषु चत्वारि यशोऽर्थप्राप्तिव्यवहारज्ञानशिवेतरक्षतिश्चेति ग्रन्थान्तरेभ्योऽपि सिद्धानि सन्ति, अन्त्यं प्रयोजनद्वयं सद्यः परनिर्वृतिः, कान्तासम्मिततयोपदेशश्चेति केवलं काव्यत एव लभ्यमिति निश्चप्रचम्। कारिकाप्रतिपादितानां सकलानां प्रयोजनानां समर्थने कृतेऽपि अन्तिममेव प्रयोजनद्वयं साहित्यकौमुदीकारेण परममभिमतमिति अग्रिमेण वृत्तिभागेन ज्ञायते।

वेदः खलु शब्दप्राधान्यात् प्रभुसम्मितः। पुराणादिश्चार्थप्राधान्यात् सुहृत्सम्मितः शास्ति। काव्यं तु शब्दार्थयोर्गुणतया रसाङ्गभूतव्यापारप्रावण्यात्तद्विलक्षणमतः कान्तासम्मितं तदिति।[5]

## काव्यप्रयोजनविषये पूर्वाचार्याणां मतम्

अष्टादशपुराणकारेण सकलशास्त्रव्यासेन महर्षिणा व्यासेन अग्निपुराणे विष्णुपुराणे च काव्यस्य प्रयोजनं प्रतिपादितमस्ति। अग्निपुराणे काव्यस्य सर्वाण्येव तत्त्वानि प्रतिपादितानि सन्ति विष्णुपुराणे तु नाममात्रमेव वर्णनमस्ति। तत्राग्निपुराणे-

**नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा।**
**कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा।।**

किञ्च-

**त्रिवर्गसाधनं नाट्यम्।**

विष्णुपुराणे यथा-

**काव्यालापाश्च ये केचिद् गीतकान्यखिलानि च।**
**शब्दमूर्तिधरस्यैते विष्णोरंशाः महात्मनः।।**[6]

सर्वं सङ्कलनेन पुरुषार्थचतुष्टयम् एव काव्यस्य प्रयोजनमिति महर्षिव्यासमतम्, यतो हि पुरुषार्थचतुष्टयमेव नरस्य नरत्वप्रतिपादक इति। किञ्च काव्यालापानां विष्णोरंशत्वं प्रतिपाद्य काव्यज्ञानं विष्णुज्ञानमिति तथा च ब्रह्मविद् ब्रह्मैव भवति इति दिशा काव्यज्ञस्य ब्रह्मज्ञता ब्रह्मस्वरूपता वा प्रतिपादिता। ब्रह्मस्वरूपतैव मोक्षप्राप्तिरिति-

**क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे।**[7]

किञ्च- **यद् गत्वा न निवर्तन्ते तद्धाम परमं मम।**[8]

इत्यादिवचनात्।

**भरतमुनिः**

काव्यात्मभूतस्य रसस्य परिष्कृतस्वरूपादिस्थापकेन नाट्यशास्त्रप्रणेत्रा रसाचार्येण महामुनिना भरतेन नाट्यप्रयोजनप्रतिपादनमुखेन काव्यस्य प्रयोजनमेवं प्रतिपादितम्-

**उत्तमाधममध्यानां नराणां कर्मसंश्रयम्।**
**हितोपदेशजननं धृतिक्रीडासुखादिकृत्।।**
**दुःखार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम्।**
**विश्रान्तिजननं लोके नाट्यमेतद् भविष्यति।।**
**धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम्।**
**लोकोपदेशजननं नाट्यमेतद् भविष्यति।।**[9]

एवं हितोपदेशः, धृतिप्राप्तिः, क्रीडा-सुखादिप्राप्तिः, विश्रान्तिप्राप्तिः, धर्मप्राप्तिः, यशःप्राप्तिः, बुद्धिप्राप्तिः, आयुष्यप्राप्तिश्चेति काव्यस्य प्रयोजनानि सन्तीति भरतमतम्।

**भामहः**

महर्षेर्व्यासस्य महामुनेर्भरतस्य च मतानां सारांशमुपस्थापयता काव्यशास्त्रालोचकेन आचार्येण भामहेन धर्मार्थ-काम-मोक्षप्राप्तिः, कलासु वैचक्षण्यप्राप्तिः, कीर्तिप्राप्तिः, प्रीतिप्राप्तिश्चेति काव्यप्रयोजनमिति सर्वथा सिद्धान्तितम्-

**धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।**
**करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम्।।**[10]

**वामनः**

आचार्येण वामनेन कीर्तिप्रीत्योरेव सर्वं समायोजयता कीर्तिः प्रीतिश्चैव काव्यप्रयोजने स्तः इति निष्कर्षरूपेण स्थापितम्-

**काव्यं सद् दृष्टादृष्टार्थं प्रीतिकीर्तिहेतुत्वात्।**[11]

**कुन्तकः**

वक्रोक्तिसिद्धान्तस्थापकेन आचार्येण कुन्तकेन तु काचिन्नवीनैव सरणिः प्रवाहिता। व्यास-भरत-भामहादिप्रतिपादितानां पुरुषार्थचतुष्टयादीनां सकलशास्त्रसामान्यप्रयोजनत्वं सुन्दरव्यवहारपरिष्पन्दत्वम्, रसेनान्तश्चमत्कारत्वञ्चेति काव्यप्रयोजनत्वेन प्रतिपादितानि-

**धर्मादिसाधनोपायः सुकुमारक्रमोदितः।**
**काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः।।**
**व्यवहारपरिष्पन्दसौन्दर्यव्यवहारिभिः ।**
**सत्काव्याभिगमादेव नूतनौचित्यमाप्यते।।**
**चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम्।**
**काव्यामृतरसेनान्तश्चमत्कारो वितन्यते।।**[12]

**रुद्रटः**

आचार्येण रुद्रटेन तु काव्यप्रयोजनविषये किञ्चिदपि नवीनं नोक्तम्, अपि तु शब्दान्तरेण भामहमतमेव प्रकाशितम्-

**ज्वलदुज्ज्वलावप्रसरः सरसं कुर्वन् महाकविः काव्यम्।**
**स्फुटमाकल्पमनल्पं प्रतनोति यशः परस्यापि।।**
**अर्थमनर्थोपशमं सममसममथवा मतं यदेवास्य।**
**विरचितरुचिरसुरस्तुतिरखिलं लभते तदेव कविः।।**
**तदिति पुरुषार्थसिद्धिः साधु विधास्यद्भिरविकलां कुशलैः।**
**अधिगतसकलज्ञेयैः कर्त्तव्यं काव्यमलममलम्।।**[13]

**मम्मटः**

वाग्देवतावतारेण श्रीमम्मटेन स्वतन्त्ररूपेण विचारं कृत्वा काव्यस्य षट्प्रयोजनानि सिद्धान्तितानि सन्ति-यशःप्राप्तिः, अर्थप्राप्तिः, व्यवहारज्ञानम्, शिवेतरक्षतिः, सद्यः परनिर्वृतिः, कान्तासम्मिततयोपदेशश्चेति।

यथा-

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।**
**सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे।।**[14]

**भोजराजः**

भोजराजस्य तु कीर्तिः प्रीतिश्चेति काव्यप्रयोजनत्वेनाभिमतौ स्तः-

**निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम्।**
**रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति।।**[15]

हेमचन्द्रः स्वकीये काव्यानुशासने आनन्दप्राप्तिः, यशःप्राप्तिः, कान्तातुल्यतयोपदेशश्चेति त्रयं काव्यप्रयोजनत्वेन प्रतिपादयतिस्म-

**काव्यमानन्दाय यशसे कान्तातुल्यतयोपदेशाय च।**[16]

**विश्वनाथदेवः**

साहित्यसुधाकारः श्रीविश्वनाथदेवस्तु ब्रह्मानन्दसहोदरं परमानन्दमेव काव्यप्रयोजनं मनुते-

**जायते परमानन्दः ब्रह्मानन्दसहोदरः।**
**यस्य श्रवणमात्रेण तद्वाक्यं काव्यमुच्यते ।।**[17]

**विश्वनाथः**

साहित्यदर्पणकारेण श्रीविश्वनाथेन तु सकलाडम्बरं विहाय चतुर्वर्गफलप्राप्तिः काव्यस्य प्रयोजनमिति प्रतिपादितमस्ति-

**चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।**
**काव्यादेव ..........................................।।**

**जगन्नाथः**

पण्डितराजेन जगन्नाथेन कीर्तिः, परमाह्लादः, गुरुराजदेवताप्रसादादयश्च काव्यप्रयोजनत्वेन स्वीकृताः सन्ति-

**तत्र कीर्तिपरमाह्लादगुरुराजदेवताप्रसादाद्यनेकप्रयोजनकस्य काव्यस्य .........।**[18]

एवं सर्वेषां पूर्वाचार्याणां मतसङ्कलनेन पुरुषार्थचतुष्टयप्राप्तिः, यशःप्राप्तिः, प्रीति- (परमाह्लाद) प्राप्तिः, व्यवहारज्ञानम्, कान्तासम्मिततयोपदेशश्चेति काव्यप्रयोजनानीति सिद्धम्। अतएव साहित्यकौमुदीकारेण सर्वेषां सामञ्जस्यमवलोकयता काव्यप्रयोजनत्वेन-

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।**
**सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे।।**

इत्येव समर्थितम्।

## काव्यकारणम्

लोके निखिलमपि तत्त्वं कारणकार्यभावमवलम्ब्यैव दृश्यते। कारणं विना कस्यापि कार्यस्योत्पत्तिर्न जायते। केनापि कारणेनोत्पादितं कार्यमपि कार्यान्तरं प्रति कारणं

भवति। यथा पिता जनकजन्यत्वेन कार्यम्, पुत्रजनकत्वेन कारणं च भवति। जन्यजनकत्वं विना कार्यकारणत्वं विना वा लोकव्यवहार एव बाधितः स्यादिति सर्वथा कार्यकारणता-ऽङ्गीक्रियत एव। केवलं ब्रह्मैवैवमस्ति यथा तत् जगतः कारणमस्ति किन्तुं कस्यापि कार्यं नास्ति, अर्थात् तस्य किमपि कारणान्तरं नास्ति। एवमवश्यं स्वीकर्तव्ये कार्यकारणभावे काव्यस्यापि किमपि कारणमस्त्येवेति निश्चितमस्ति। कारणमपि द्विधा दृश्यते कारकम्, ज्ञापकञ्चेति; येन कार्यमुत्पाद्यते तत् कारकं कारणम्, येन च कारणान्तरेणोत्पादितमपि कार्यं कदाचिन्न ज्ञायते समागते तस्मिन् तद् ज्ञानं भवतीति तत् ज्ञापकं कारणं कारकं भवति। अत्र कारणताविचारप्रकरणे कारकं कारणमेव प्रतिपाद्यमिति किं कारकं काव्यस्येति मीमांसायामुक्तं साहित्यकौमुदीकारेण श्रीविद्यानाथेन-

**शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।**
**काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे।।**[19]

शक्तिः, लोकशास्त्रकाव्याद्यवेक्षणात् निपुणता, काव्यज्ञशिक्षया अभ्यास इति त्रयः सम्मिलितरूपेण काव्यं प्रति कारणमित्यर्थः। यथोक्तं वृत्तिभागे-

**शक्त्यादित्रयं काव्यकारणमित्यर्थः। इति त्रिकं समुदितमेव हेतुरित्येके।**[20]

अपरेषां मतं प्रदर्शयता साहित्यकौमुदीकारेण केवला शक्तिः काव्यस्य कारणमित्यपि प्रतिपादितम्। यथा-

**डिम्भेनापि काव्योत्पादनाच्छक्तिरेव केवलेत्यपरे।**[21]

**त्रयं हेतुः** इत्येके। **केवला शक्तिः**, इत्यपरे इत्युक्त्वा मतद्वयमुपस्थापितम्, किन्तु कस्मिन्नपि पक्षे स्वकीयः पक्षपातो नैव प्रदर्शितः।

## पूर्वाचार्याणां मतम्

काव्यालङ्कारे आचार्यभामहेन केवलं प्रतिभैव काव्यकारणत्वेन प्रतिपादिताऽस्ति-

**काव्यं तु जातु जायेत कस्यचित् प्रतिभावतः।।**[22]

## आचार्यो दण्डी

**नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम्।**
**अमन्दश्चाभियोगः स्यात्कारणं काव्यसम्पदः।।**[23]

## मम्मटः

आचार्यो मम्मटस्तु शक्तिः, निपुणता, अभ्यासश्चेति त्रयं कारणं काव्यस्येति प्रतिपादयति-

**शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।**
**काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे।।**[24]

**हेमचन्द्रः**

हेमचन्द्रस्तु काव्यं प्रति प्रतिभा कारणम्। प्रतिभां प्रतिं च व्युत्पत्त्यभ्यासौ कारणमिति स्वीकरोति-

**व्युत्पत्त्यभ्यासौ प्रतिभां संस्कुरुतः। तथाहि-**
**प्रतिभाऽस्य हेतुः ..............................।।**[25]

**वाग्भट्टः**

**प्रतिभा कारणं तस्य व्युत्पत्तिस्तु विभूषणम्।**
**भृशोत्पत्तिकृदभ्यास इत्याद्यकविसंकथा।।**[26]

**रुद्रटः**

आचार्यो रुद्रटोऽपि केवलां शक्तिमेव काव्यकारणत्वेन प्रतिपादयति-

**मनसि सदा सुसमाधिनि विस्फुरणमनेकधाऽभिधेयस्य।**
**अक्लिष्टानि च पदानि विभान्ति यस्यामसौ शक्तिः।।**[27]

**वामनः**

वामनस्तु **कवित्वबीजं प्रतिभानम्**[28] इत्युक्त्वा प्रतिभामेव काव्यकारणत्वेन प्रतिपादयति।

**जयदेवः**

**प्रतिभैव श्रुताभ्याससहिता कवितां प्रति।**
**हेतुर्मृदम्बुसम्बद्धा बीजमाला लतामिव।।**[29]

एवञ्च यथा मृदम्बुसम्बद्धा बीजमाला लताम्प्रति कारणं तथैव कवितां प्रति श्रुताभ्याससहिता प्रतिभा कारणमिति।

**पण्डितराजजगन्नाथः**

पण्डितराजजगन्नाथोऽपि स्वकीये रसगङ्गाधरे काव्यं प्रति साक्षात् प्रतिभा कारणम्। प्रतिभां प्रति च क्वचिददृष्टं क्वचिच्च व्युत्पत्त्यभ्यासौ कारणमिति। यथोक्तम्-

**तस्य च कारणं कविगता केवला प्रतिभा।**

**समीक्षणम्**

सर्वेषामाचार्याणां काव्यकारणताप्रतिपादनं दर्शं दर्शं कृतायां मीमांसायां निष्कर्षरूपेण मतत्रयं सम्मुखमायाति-

1 - काव्यं प्रति केवला प्रतिभा कारणम्।
2 - श्रुताभ्याससहिता प्रतिभा कारणम्।
3 - शक्तिनिपुणताभ्यासाः कारणम्।

एतेषु प्रथममतावलम्बिनः सन्ति- भामह-हेमचन्द्र-रुद्रट-वामन-वाग्भट्ट-पण्डितराज-जगन्नाथादयः। द्वितीयमतावलम्बिषु दण्डि-जयदेवादयः सन्ति। तृतीयमतावलम्बिनस्तु मम्मटः, साहित्यकौमुदीकारो, विद्यानाथश्च सन्ति। ये खलु प्रथममतावलम्बिनः काव्यं प्रति केवला प्रतिभा कारणम् इति वदन्ति तेषु केचन तु भामह- वाग्भट्ट-रुद्रट-वामनादयः एवं सन्ति ये काव्यं प्रति प्रतिभाऽतिरिक्तस्यान्यस्य कस्यापि कारणत्वं नाङ्गीकुर्वन्ति, किन्तु अपरे- हेमचन्द्र-पण्डितराजजगन्नाथादयः एवमपि सन्ति ये काव्यं प्रति प्रतिभायाः, प्रतिभां प्रति च अदृष्टव्युत्पत्त्यभ्यासानां कारणतां प्रतिपादयन्ति। तेषां मते काव्यं प्रति साक्षात्सम्बन्धेन प्रतिभा कारणम्, परम्परासम्बन्धेन च व्युत्पत्त्यभ्यासादयः कारणानीति।

श्रुताभ्याससहिता प्रतिभा कारणम् इति द्वितीयमतावलम्बी दण्डी तृणारणिमणिन्यायेन पृथक् पृथक् कारणतां प्रतिपादयति। तन्मते तु यथा दाहम्प्रति तृणारणिमणीनां त्रयाणामपि पृथक्-पृथक् स्वतन्त्रकारणता भवति तथैव काव्यं प्रति प्रतिभा पृथक् कारणम्, व्युत्पत्त्यभ्यासादयश्च पृथक् कारणमिति। यथा तत्कथनेनैव सिद्धम्-

**नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम्।**
**अमन्दश्चाभियोगः स्यात् कारणं काव्यसम्पदः।।**

अत्र नैसर्गिकी प्रतिभा काव्यसम्पदः कारणम्, बहुनिर्मलं श्रुतं काव्यसम्पदः कारणम् अमन्दाभियोगः (अभ्यासः) च काव्यसम्पदः कारणमित्यर्थसङ्गतिः। वाक्यत्रये चकारत्रयस्य प्रयोगदर्शनात् सिद्धमेव तेषां सर्वेषामपि पृथक्-पृथक् कारणतेति।

जयदेवस्तु दण्डचक्रचीवरादिन्यायेनैव प्रतिभा-व्युत्पत्त्यभ्यासादीनां कारणतामङ्गीकरोतीति तद्दृष्टान्तेनैव स्पष्टमस्ति। यथा लतां प्रति नहि केवलं बीजमाला कारणम्, न च मृत्तिका जलं वा, अपितु मृत्तिकाजलसम्बद्धा बीजमाला कारणमिति लताम्प्रति मृदम्बुबीजमालादीनां सम्मिलितकारणता सिद्धा। एवं च जयदेवमतं मम्मटविद्याभूषणमतमेव स्पृशतीति नैव सन्देहः।

'काव्यं प्रति शक्तिनिपुणताभ्यासाः कारणम्' इति वादिनौ स्तः काव्यप्रकाशकारो मम्मटः, साहित्यकौमुदीकारो विद्याभूषणश्चेति। अत्र शक्तिः प्रतिभापरपर्यायः, निपुणता च व्युत्पत्त्यपरपर्याय इति नास्ति विवादः। अनयोः मतानुसारं काव्यं प्रति शक्तिनिपुणताभ्यासादीनां दण्डचक्रचीवरादिन्यायेन समुदितकारणता भवति। अर्थात् यथा घटनिर्माणे दण्डचक्रचीवरादयः समुदितरूपेण कारणमस्ति, एषु त्रिषु सत्स्वेव घट-निर्माणं जायते, कस्याप्येकस्याप्यभावे घटनिर्माणं न जायते तथैव शक्तिनिपुणताभ्यासादीनां त्रयाणां सत्त्वे एव काव्यं भवति कस्याप्येकस्याप्यभावे न जायते काव्यनिर्माणमिति प्रतिपादनार्थमेव-

इति त्रयः समुदिताः न तु व्यस्ताः, काव्यस्य निर्माणे समुल्लासे च हेतुर्न तु हेतवः[30] इति काव्यप्रकाशे मम्मटः। इति त्रिकं समुदितमेव हेतुरित्येके इति साहित्यकौमुद्यां विद्यानाथश्चेति।

साहित्यकौमुदीकारः श्रीविद्याभूषणस्तु त्रिकं समुदितमेव हेतुरित्येके शक्तिरेव केवलेत्यपरे इति पक्षद्वयमपि समुपस्थाप्योभयत्रापि स्वकीयां सम्मतिं प्रदर्शयति। वस्तुतस्तूभयोरपि पक्षयोः कश्चिन्मौलिकभेदो नास्ति, केवलं प्रतिपादनप्रकारे एवास्ति। केवलायाः प्रतिभायाः कारणतावादिभिरपि परम्परासम्बन्धेन काव्यं प्रति व्युत्पत्त्यभ्यासादीनां कारणतायाः अङ्गीकारात्। अतएव विद्यानाथेन साहित्यकौमुद्यां पक्षद्वयमपि समुपस्थापितम्, किन्तु कस्मिन्नपि पक्षे स्वाभिमतं नैव प्रकटितम्।

## काव्यस्वरूपम्

सहृदयहृदयाह्लादकस्य, धर्मार्थकाममोक्षसम्पादकस्य, विलक्षणशब्दार्थमयस्य, शब्दप्रधानवेदादिशास्त्रेभ्यः, अर्थप्रधानपुराणेतिहासादिभ्यश्च विलक्षणस्य, सर्वथा नवनवस्य काव्यस्य स्वरूपविमर्शे विविधविदुषां विभिन्नप्रतिभामूलकाः विभिन्नविचाराः दृश्यन्ते। प्राधान्येन काव्यशास्त्रप्रणेतारः सन्ति व्यास-भरत-दण्डि-भामह-भट्टोद्भट-रुद्रट-भट्टनायक-वामन-मुकुलभट्ट-प्रतिहारेन्दुराजा ऽऽनन्दवर्धन- महिमभट्ट-कुन्तकाभिनवगुप्त-शौद्धोदनि-वाग्भट- रुय्यक-भोजराज- मम्मट-हेमचन्द्र-केशवमिश्र-पीयूषवर्ष (जयदेव) विद्यानाथ-विश्वनाथ-गोविन्दठक्कुराऽप्पयदीक्षित-जगन्नाथ-विद्याभूषण-विश्वेश्वराऽच्युतरायप्रभृत्यः।

कस्यापि वस्तुनः स्वरूपं द्विधा भवति- आभ्यन्तरस्वरूपम्, बाह्यस्वरूपञ्चेति। तत्राऽऽभ्यन्तरस्वरूपविमर्शे काव्यात्मविचारः उपस्थापितोऽस्ति, यैः काव्यशास्त्रेऽनेकविधा सम्प्रदायाः प्रचलिताः सन्ति। यथा- अलङ्कारसम्प्रदायः, रीतिसम्प्रदायः, वक्रोक्तिसम्प्रदायः, ध्वनिसम्प्रदायः, औचित्यसम्प्रदायः, रससम्प्रदायश्चेति। एवमात्मविचारस्तु पृथगस्ति। काव्यस्वरूपनिरूपणे तु प्रायः बाह्यमेव स्वरूपं प्रतिपादिमस्ति काव्यशास्त्रिभिः। काव्यशास्त्रिभिः प्रतिपादितानां काव्यस्वरूपाणां सामान्येनात्र दिग्दर्शनमुपस्थाप्यते-

### महर्षिव्यासः

महर्षिव्यासस्तु अग्निपुराणे मनोऽनुकूल (काव्यघटनानुकूल)-समुचितार्थ-समुदायव्यवच्छिना (सम्पन्ना) पदावलिः पदसमूहः (वाक्यं) काव्यमिति मनुते-

**संक्षेपाद्वाक्यमिष्टार्थव्यवच्छिन्ना पदावलिः।**
**काव्यं स्फुटदलङ्कारं गुणवद्दोषवर्जितम् ॥**[31]

### महामुनिभरतः

महामुनिना भरतेन दृश्यकाव्यस्यापि काव्यान्यतरभेदत्त्वमङ्गीकृत्य नाटकलक्षणमुखेन काव्यलक्षणमेवं प्रतिपादितमस्ति-

**मृदुललितपदाढ्यं गूढशब्दार्थहीनं**
**जनपदसुखबोध्यं युक्तिमन्नृत्ययुक्तम्।**
**बहुकृतरसमार्गं सन्धिसन्धानयुक्तं**
**भवति जगति योग्यं नाटकं प्रेक्षकानाम्।।**[32]

अत्र जनपदसुखबोध्यं गूढशब्दार्थहीनं मृदु ललितं पदाढ्यं (पदसमूहः) काव्यमिति लक्षणं कृत्वा यद्यपि महर्षिव्यासमते वाक्यस्यैव काव्यत्वं प्रतिपादितम् तथापि गूढशब्दार्थहीनत्वं कल्पयित्वा शब्दार्थयोरुभयोरपि काव्यत्वं सङ्केतितम्।

**दण्डी**

महर्षिव्यासोक्तमेव लक्षणमादाय दण्डिना वाक्यस्थाने, शरीरमिति संशोधनं कृत्वा-

**शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावलिः।**[33]

इलि लक्षणं कृतम्। महर्षिव्यासकृतं मत्कृतं चापि लक्षणं केवलं बाह्यमस्तीति प्रतिपादनार्थमेव लक्षणे शरीरम् इति सुस्पष्टमुक्तम्।

**कान्तिचन्द्रः**

कान्तिचन्द्रेण काव्यदीपिकायां दण्डिकृतमेव लक्षणं यथावद्रूपेणैवाङ्गीकृतम्-

**शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावलिः।**[34]

**भामहः**

काव्ये शब्दार्थयोरुभयोरपि समानं महत्त्वमनुभवता आचार्येण भामहेन स्वकीये काव्यालङ्कारे-

**शब्दार्थौ सहितौ काव्यम्**[35]

इति लक्षणं सिद्धान्तितम्

**भट्टोद्भटः**

आचार्यभामहकृतेन काव्यलक्षणेन प्रभावितो भट्टोद्भटोऽपि भामहलक्षणमेव यथावदुपस्थापयतिस्म-

**शब्दार्थौ सहितौ काव्यम्**[36]

**रुद्रटः**

आचार्येण रुद्रटेनापि भामहभट्टोद्भटादिभिः प्रतिपादिते काव्यलक्षणे काचिन्नवीनता नैवोपस्थापिता। सकलाडम्बरं विहाय सामान्येव रूपेण शब्दार्थयोः काव्यत्वं प्रतिपादयता तेनोक्तम्-

**ननु शब्दार्थौ काव्यम्[37]-**

**वामनः**

वामनस्तु रुद्रटलक्षणोक्तयोः शब्दार्थयोः गुणालङ्कारसंस्कृतत्वमिति विशेषणं दत्त्वा तयोरेव शब्दार्थयोः काव्यत्वमङ्गीकृतवान् यौ गुणालङ्कारसंस्कृतौ स्याताम्-

**काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोः**
**वर्तते ........................................[38]**

**आनन्दवर्धनः**

आनन्दवर्धनेन यद्यपि काव्यलक्षणप्रस्तावद्वारा काव्यलक्षणं नैव कृतमस्ति तथापि ध्वनिप्रस्तावे एव तेन

**वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यम्[39]**

इत्युक्त्वा शब्दस्य काव्यत्वं प्रतिपादितमपि शब्दार्थयोः काव्यत्वसंस्कारो नैव परित्यक्तः। तथा-

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूभिरिः कथितः।।[40]**

अत्र अर्थः शब्दो वा इत्यनेन, पुनश्च-

**सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन।**
**यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः।।[41]**

इत्यत्र शब्दार्थयोरुभयोरेव काव्यत्वं प्रतिपादितम्।

**वाग्भटः**

वाग्भटेन वाग्भटालङ्कारे वामनकृतलक्षणे स्फुटरीतिरसोपेतत्वं संयोज्य शब्दार्थयोः काव्यत्वं प्रतिपादितम्-

**साधुशब्दार्थसन्दर्भं गुणालङ्कारभूषितम्।**
**स्फुटरीतिरसोपेतं काव्यं कुर्वीत कीर्तये।।[42]**

**कुन्तकः**

भामहलक्षणेन प्रभावितः आचार्यकुन्तकः वक्रोक्तिसिद्धान्तं स्थापयन् वक्रकविव्यापार-सहितौ शब्दार्थौ काव्यमिति स्थापयामास-

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।[43]**

**विद्यानाथः**

वामनलक्षणे दोषवर्जितौ इति शब्दार्थविशेषणं दत्त्वा विद्यानाथेन प्रतापरुद्रीये सिद्धान्तितं यत् नहि केवलं गुणालङ्कारयुक्तावेव शब्दार्थौ काव्यम्, अपि तु दोषवर्जितावपि-

गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ।
गद्यपद्योभयमयं काव्यं काव्यविदो विदुः।।[44]

**अच्युतरायः**

अच्युतरायेण साहित्यसारे विद्यानाथलक्षणमेव समर्थितम्-

तत्र निर्दोषशब्दार्थगुणवत्त्वे सति स्फुटम्।
गद्यादिबन्धरूपत्वं काव्यसामान्यलक्षणम्।।[45]

**भोजराजः**

निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम्।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति।।[46]

**शौद्धोदनिः केशवमिश्रश्च**

काव्यं रसादिमद् वाक्यं श्रुतं सुखविशेषकृत्।[47]

**जयदेवः**

निर्दोषा लक्षणवती सरीतिर्गुणभूषणा।
सालङ्काररसानेकवृत्तिर्वाक् काव्यनामभाक्।।[48]

**हेमचन्द्रः**

अदोषौ सगुणौ सालङ्कारौ च शब्दार्थौ काव्यम्[49]

**मम्मटः**

तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि।[50]

**विश्वनाथः**

रसवादिना आचार्येण विश्वनाथेन रसस्यैव काव्यात्मत्वं प्रतिपादयता तस्यैव वाक्यस्य काव्यत्वं प्रतिपादितं यद् रसात्मकं स्यात् -

वाक्यं रसात्मकं काव्यम्[51]

**पण्डितराजजगन्नाथः**

पण्डितराजजगन्नाथेन लोकोत्तराह्लादजनकज्ञानगोचरीभूतार्थप्रतिपादकस्य शब्दस्यैव काव्यत्वं सिद्धान्तितम्-

रमणीयार्थप्रतिपादकः शब्दः काव्यम्।[52]

**विद्याभूषणः**

यद्यपि विद्याभूषणेन कारिका सूत्रं वा नैव कृतम्, तेन तु केवलं वृत्तिरेव कृताऽस्ति तथापि सूत्रस्य व्याख्याने किमपि संशोधनं नैव प्रदर्शितमिति सूत्रमेव समर्थयता-

तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि[53]

इति लक्षणं सिद्धान्तितम्।

एतेषां काव्यबाह्यस्वरूपाणां कृतायां मीमांसायां ज्ञायते सामान्येन पूर्वोक्तानि लक्षणानि वर्गत्रयेण विभक्तानि सन्ति-

1- शब्दः काव्यम्।

2- शब्दार्थौ काव्यम्।

3- शब्दार्थयोः सहभावः काव्यम्।

## शब्दः काव्यम्

शब्दस्य काव्यत्वमङ्गीकुर्वतामाचार्याणां मतानुसारमपि नहि केवलं शब्द एव काव्यमिति कथयितुं शक्यते। यतो हि शब्दस्य रमणीयत्वं काव्यत्वनियामकम्, अन्यथा-

**गोरपत्यं बलीवर्दः घासमत्ति मुखेन सः।**
**मूत्रं मुञ्चति शिश्नेन अपानेन तु गोमयम्।।**

इत्यस्यापि काव्यत्वं स्यात्। रमणीयता तु अर्थेनैव अर्थाभावे शब्दस्याकिञ्चित्करत्वात्। अतएव पण्डितराजेन-

**रमणीयार्थप्रतिपादकः शब्दः काव्यम्।**

इति लक्षणं कृत्वा तत्परिष्कारः कृत :-

**रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता। लोकोत्तरत्वं च आह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेषः।**[54]

## शब्दार्थौ काव्यम्

ये शब्दार्थयोरुभयोरपि काव्यत्वमङ्गीकुर्वन्ति ते काव्यं पठितम्, काव्यं श्रुतम्, काव्यं श्रुतम् अर्थो न ज्ञातः इत्यादिव्यवहार इव काव्यं बुद्धम् इत्यपि व्यवहारं प्रदर्श्य सङ्गतिमुपस्थापयन्ति, अर्थस्यैव बोधविषयत्वात्। एवं व्यासज्यवृत्त्या शब्दार्थयोः काव्यत्व-प्रतिपादकेष्वपि पक्षद्वयं दरीदृश्यते। एके ते सन्ति ये काव्ये शब्दार्थयोरुभयोरपि प्राधान्यमङ्गीकुर्वन्ति। तेषां मतानुसारं काव्यं वेदादिविलक्षणम्, शब्दार्थयोरुभयोरपि प्राधान्यात्। अयं भावः-वेदे शब्दस्य प्राधान्यम्, अर्थस्य तु गौणता भवति। पुराणेतिहासादिषु अर्थस्य प्रधानता शब्दस्य च गौणता भवति, किन्तु काव्ये शब्दार्थयोरुभयोरपि प्राधान्यमेव।

एवं काव्ये शब्दार्थयोः प्राधान्यप्रतिपादकेषु आचार्यो हेमचन्द्रः प्रधानपदमलङ्करोति। स्वकीये काव्यानुशासने शब्दार्थौ काव्यम् इति काव्यलक्षणं कृत्वा तद्व्याख्यां कुर्वन्-

ननु शब्दः इत्यनेनार्थस्य, अर्थः इत्यनेन च शब्दस्य स्वयमेव ग्रहणम्, शब्दार्थयोर्नित्यसम्बन्धत्वात् तथापि शब्दार्थौ इति उभयोः प्राधान्यख्यापनार्थम्।[55]

शब्दार्थौ काव्यम् इति वादिषु केचन एवमपि सन्ति ये वेदादिशास्त्रेभ्यः काव्यस्य वैलक्षण्यं प्रतिपादयन्तः काव्ये शब्दार्थयोरुभयोरपि गौणत्वमङ्गीकुर्वन्ति। तेषामयमाशयः-

वेदे अर्थस्य गौणता, पुराणेतिहासादिषु च शब्दस्य गौणता भवति किन्तु काव्ये शब्दार्थयोरुभयोरपि गौणत्वं भवति। एवं वादिषु प्रधानपदमलङ्कुर्वन्ति वाग्देवतावताराः काव्यप्रकाशकाराः मम्मट्टाः। यथोक्तं काव्यप्रकाशे-

**शब्दप्रधानवेदादिशास्त्रेभ्यः, अर्थतात्पर्यवत्पुराणेतिहासादिभ्यश्च शब्दार्थयोर्गुणभावेन व्यापारप्रवणतया विलक्षणं यत् काव्यम् .............।[56]**

## सहभावः काव्यम्

काव्यशास्त्रिषु केचन एवमपि सन्ति ये न शब्दस्य प्राधान्यमङ्गीकुर्वन्ति न तु अर्थस्यैव, अपि तु उभयोः सह भावत्वमङ्गीकुर्वन्ति। तेषां मतानुसारं शब्दार्थयोः सहभावत्वं (समानस्थितिः) काव्यत्वप्रयोजकम्। अर्थाद् यदि प्राधान्यं स्यात्तदोभयोरपि, यदि गौणत्वं स्यात्तदोभयोरपि। एवंवादी राजशेखरोऽस्ति। तेन काव्यमीमांसायां काव्यस्वरूपं प्रतिपादयता-

**उभयोः याथातथ्येन सहभावः साहित्यम्[57]**

इत्युक्तम्। अत्र याथातथ्येन इत्यस्य प्राधान्येन अप्राधान्येन वा इत्यर्थः।

एवं बहुषु मतेषु सत्सु साहित्यकौमुदीकारो विद्याभूषणस्तु काव्यप्रकाशकार-मम्मटमतानुयायी दरीदृश्यते। यतो हि तेनापि-

**तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि।**

इति लक्षणमङ्गीकृत्य काव्ये शब्दार्थयोरुभयोरपि गौणत्वमङ्गीकृतम्। यथा-
वेदः खलु शब्दप्राधान्यात् प्रभुसम्मितः पुराणादिश्चार्थप्राधान्यात् सुहृत्सम्मितः शास्ति। काव्यं तु शब्दार्थयोर्गुणतया रसाङ्गभूतव्यापारप्रावण्यात्तद्विलक्षणमतः कान्तासम्मितं तदिति।[58]

'शब्दः काव्यम्' 'शब्दार्थौ काव्यम्' इति पक्षद्वये कतरद्युक्तमिति विचारणाया-मस्मद्गुरुचरणैरुक्तम्-

यद्यपि शब्दोऽपि विशेषणतया शाब्दबोधे भासते इति वैयाकरणानां राद्धान्तादत्रार्थपदेन शब्दोऽपि गृह्यते। एवं रमणीयार्थरमणीयशब्दप्रतिपादकः शब्दः काव्यम् इति फलितम्। अर्थात् रमणीयशब्दार्थौ काव्यम्, तथापि तयोरुपस्थापकः शब्दविशेषविन्यास एवेति दृष्ट्या रमणीयार्थप्रतिपादकः शब्दः काव्यम् इत्युक्तम्।

वस्तुतस्तु चमत्कारिशब्दार्थौ काव्यम् इति निर्दुष्टं लक्षणम्।[59]

## सन्दर्भ-सूची

1. श्लोकवार्तिकः .
2. साहित्यकौमुदी 1/2.
3. साहित्यकौमुदी 1/2.
4. काव्यप्रकाशः उ0 1 पृ0 .

5. साहित्यकौमुदी 1/2.
6. साहित्यदर्पणः, परि0 1.
7. गीता.
8. गीता.
9. नाट्यशास्त्रम् .
10. भामह0का0लं0.
11. काव्यालङ्कारसूत्रवृत्तिः.
12. वक्रो0 1/3-5.
13. रुद्रटः, काव्यालङ्कारे.
14. काव्यप्रकाशः . 1/1.
15. सरस्वतीकण्ठाभरणे- 1/2.
16. काव्यानुशासनम् - 1/3.
17. 1/4.
18. रसगङ्गाधरः - आ01.
19. 1/3.
20. तत्रैव.
21. तत्रैव.
22. काव्यालङ्कारे - 1/5.
23. काव्यादर्शः - 1/103.
24. काव्यप्रकाशः 1/2.
25. काव्यालङ्कारः - पृ0 5-6.
26. वाग्भटालङ्कारः - 1/3.
27. काव्यालङ्कारः - 1/105.
28. काव्यालङ्कारसूत्र वृत्तिः 1/3/16).
29. चन्द्रालोकः- 1/6.
30. उ0-1, इति काव्यप्रकाशे मम्मटः .
31. अग्नि0पु0 337/6-7.
32. नाट्यशा0- 17/121.
33. काव्यादर्शः 1/10.
34. काव्यदीपिका- 1/3.
35. काव्यालङ्कारः - 1/16.
36. काव्यालङ्कारसारसङ्ग्रहः - 1/16.
37. काव्यालङ्कारः 1/1.
38. काव्यालङ्कारसूत्रवृत्तिः - 1/1/1

39. ध्वन्यालोकः .
40. ध्वन्या0- 1/13.
41. तत्रैव 1/8.
42. वाग्भटालङ्कारः - 1/2.
43. वक्रोक्तिजीवितम् - 1/7.
44. प्रतापरुद्रीयम् - का0 1.
45. साहित्यसारः ध0 10 का0 18.
46. सरस्वतीकण्ठाभरणम् - 1/2.
47. अलङ्कारसूत्रम् - 1/2.
    अलङ्कारशेखरः- 1/2.
48. चन्द्रालोकः - 1/7.
49. काव्यानुशासनम् अ0 1, पृ. 16.
50. काव्यप्रकाशः 1/4.
51. साहित्यदर्पणः 1/3.
52. रसगङ्गाधरः 1/ पृ0 10.
53. साहित्यकौमुदी- 1.
54. रसगङ्गाधरः, आ0 1.
55. काव्यानुशासनम् - 1/ अ0 1, पृ0 17.
56. काव्यप्रकाशः 1/2.
57. काव्यमीमांसा.
58. साहित्यकोमुदी- 1/2.
59. श्री मम्मटपण्डितराजजगन्नाथयोर्मतभेदविमर्शः पृ0 59.



## द्वितीयोऽध्यायः

# शब्दार्थवृत्तिविचारः वाच्यवाचकविवेचनम् लक्ष्यलक्षकविवेचनम् व्यङ्ग्यव्यञ्जक-विवेचनम्

### वाच्यवाचकविवेचनम्

शब्दार्थौ काव्यम् इति काव्यलक्षणे लक्ष्यघटकस्य काव्यस्य लक्षणघटकं पदमस्ति शब्दार्थाविति। अत्र शब्दश्चार्थश्चेति द्वन्द्वसमासात् शब्दः अर्थः इत्यंशद्वयम्। ते च शब्दाश्च अर्थाश्च त्रिविधाः। वाचक-लाक्षणिक-व्यञ्जका इति शब्दाः वाच्य-लक्ष्य-व्यङ्ग्याश्चेत्यर्थाः। एषु वाच्यवाचकयोः किं स्वरूपम्? काव्ये चानयोः का स्थितिः? अनयोर्विषये पूर्वाचार्याणां किमभिमतमित्यादिविषयाः सम्प्रति प्रकरणप्राप्ताः विचार्यन्ते।

### वाच्यवाचकयोः स्वरूपम्

वाच्यार्थप्रतिपादकः शब्दो वाचकः वाचकशब्दप्रतिपाद्योऽर्थो वाच्यः इति वाच्यवाचकस्वरूपेऽन्योन्याश्रयः, यदा वाच्यार्थस्य ज्ञानं स्यात् तदा वाचकशब्दज्ञानम्, वाचकशब्दज्ञाने सञ्जाते सति वाच्यार्थस्य परिज्ञानं स्यादित्यन्योन्याश्रयो दोषः। अतएव नेदं सामान्यं स्वरूपं वाच्यवाचकयोरिति विशेषजिज्ञासायामुच्यते- अनयोः वाच्यवाचक-योरस्ति कश्चित् सम्बन्धः येनानयोः स्वरूपं प्रतिपाद्यते। स च सम्बन्धः प्रतिपाद्यप्रतिपादकभाव एव। वाच्यः प्रतिपाद्यः, वाचकश्च प्रतिपादकोऽभिधानाम। एवञ्चाभिधावृत्तिसाहाय्येन वाच्यार्थनिष्ठप्रतिपाद्यतानिरूपित- प्रतिपादकत्वे सति शब्दत्वं वाचकत्वमिति वाचकस्वरूपम्।

अस्माच्छब्दादयमर्थो बोद्धव्यः, इदं वा पदममुमर्थं बोधयतु इति निश्चितोऽर्थो वाच्यः। अस्माच्छब्दादयमर्थो बोधव्यः इति व्यवहार एव कथं जायत इति जिज्ञासायामुच्यते- सङ्केतसाहाय्येनेति कोऽसौ सङ्केतः इति चेत्? उच्यते- यदा कश्चिद् किञ्चिद् वस्तु निर्माति तदा तस्य नामकरणं करोति, इदमनेन पदेन अनया वा संज्ञया बोधव्यमिति, यथा पिता पुत्रस्य नामकरणं करोति। एवं च निर्मात्रा निर्धारितस्य तस्य पदस्य तस्मिन् अर्थे (वस्तुनि) सङ्केतो भवति। एवञ्च सङ्केतितोऽर्थो वाच्यः इति। सर्वं सङ्कलय्योक्तम्-

**साक्षात्सङ्केतितं योऽर्थमभिधत्ते स वाचकः।**[1]

वटो ग्रामः इत्यत्र वटपदेन ग्रामो वाच्यः। पूर्वं तु वटपदं वटवृक्षरूपेऽर्थे सङ्केतितोऽस्ति ततश्च वटवृक्षाधिक्येन वटपदेनैव ग्रामस्यापि बोधो जायत इति वटपदं ग्रामरूपार्थेऽपि सङ्केतितमिति वटपदस्य साक्षात् वृक्षे सङ्केतः, परम्परया च ग्रामे इति ग्रामरूपार्थे वटपदं लाक्षणिकमिति नैव वाचकम्। साक्षात्सङ्केतितं निश्चितस्वरूपमर्थं यः अभिधया प्रतिपादयति स शब्दः वाचक इति।

## अभिधास्वरूपम्

वाच्यवाचकस्वरूपे निर्णीते सति वाचकशब्देन वाच्यार्थप्रतिपादिका शक्तिरभिधेति सुवचमभिधास्वरूपम्। अतएवोक्तं साहित्यकौमुद्याम्-

**स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते।[2]**

एवमेव मम्मटभट्टेनापि-

**स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते।[3]**

आचार्यविश्वनाथोऽपि सङ्केतितार्थसाहाय्येनैवाभिधां लक्षयति-

**तत्र सङ्केतितार्थस्य बोधनादग्रिमाऽभिधा।।[4]**

साहित्यरत्नाकरे धर्मसूरिणाप्येवमेव-

**मुख्यार्थगोचरा तस्य व्यापृतिः कथ्यतेऽभिधा।[5]**

अस्मद्गुरुचरणैः श्रीवायुनन्दनपाण्डेयमहोदयैस्तु सकलशास्त्रावगाहनेन-

**अर्थबोधजनकतावच्छेदकधर्मरूपा शब्दशक्तिरभिधा[6]**

इत्यभिधास्वरूपं निर्धारितमस्ति। यथोक्तम्-

यद्यपि अभिधा शक्त्यपरपर्यायेति मीमांसकनैयायिकादिभिः शक्तिपदेनाभिधीयते, तथापि शक्तिस्त्रिविधा भवति- सहजा, आधेयजा, शब्दनिष्ठा च। अग्न्यादौ दाहादिका शक्तिः सहजा, मन्त्रादिना मूर्तौ देवत्वादिसम्पादिका शक्तिराधेयजा। अर्थबोधजनकता-वच्छेदकधर्मरूपा शक्तिः शब्दनिष्ठा। अतएव अर्थबोधजनकतावच्छेदकता-वच्छेदकधर्मरूपा शक्तिः शब्दनिष्ठा अतएव अर्थबोधजनकता-वच्छेदकधर्मरूपा शब्दशक्तिरभिधा।[7]

भवतु नाम शास्त्रान्तरकाराणां मतानुसारमभिधापरपर्याया शक्तिः पदार्थान्तरम्? प्रतिबन्धकाभावो वा। काव्यशास्त्रिभिस्तु सामान्येन मुख्यार्थप्रतिपादकव्यापारत्वेनैव लक्षिताऽस्त्यभिधा। शक्तिस्तु अभिधालक्षणाव्यञ्जनाश्चेति तिस्रोऽपि सन्ति। यथोक्तं साहित्यदर्पणे-

**तिस्रः शब्दस्य शक्तयः[8]**

**शक्तिग्रह :**

एवं वाच्यवाचके परिज्ञाते सङ्केतः कुत्र गृह्यते अर्थात् पदस्य सङ्केतः कस्मिन् अर्थे गृह्यते? कथं गृह्यते? इत्यादि ज्ञानमावश्यकमिति ग्रन्थकारेणोक्तम्-

**सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा।**[१]

चतुष्टयी शब्दानां प्रवृत्तिः इति महाभाष्यकारवचनानुसारं येन केनापि शब्देन चतुर्विधस्यापि अर्थस्य प्रतीतिर्जायते। ते च जातिगुणक्रियाद्रव्यरूपाः इति यतो हि यस्मिन् कस्मिन्नपि वस्तुनि जातिः, गुणः, क्रिया, द्रव्यञ्चेति भवति। यथ- 'गौः' इति पदेन गोत्वरूपा जातिः वर्तते, शुक्लत्वादयो गुणाः वर्तन्ते, चलनादयः क्रियाः वर्तन्ते, डित्थादयः संज्ञाश्च वर्तन्ते इति गोपदेन गोत्वजातिमतः, शुक्लत्वादिरूपगुणवतः, चलनादिरूपक्रियावतः, डित्थादिनामवतश्च व्यक्तेः परिज्ञानं जायते। अतएव गौः शुक्लश्चलो डित्थ इत्यभिन्नाभिधानो जायते।

एते जातिगुणक्रियाद्रव्यादयो व्यक्तेः उपाधयः सन्ति व्यक्तावेवैतेषां संभवात् यतो हि जातिः व्यक्तिं विना न तिष्ठति, नहि निर्विशेषं सामान्यम् इति नियमस्य जागरूकत्वात्। गुणस्य गुणिनं विना, क्रियायाः क्रियावन्तं विना, संज्ञायाश्च संज्ञिनं (व्यक्तिं) विनाऽ सम्भवात्। यद्यपि आनयनादिक्रियायोग्या व्यक्तिरेवास्ति तथापि आनन्त्यव्यभिचाराच्च न व्यक्तौ सङ्केतः।

केचन मीमांसकाः जातावेव शक्तिग्रहं स्वीकुर्वन्ति। सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तमिति वदन्तो मीमांसकाः जातावेव शक्तिं स्वीकुर्वन्ति। यतो हि नित्यत्वे सति, एकत्वे सति, अनेकसमवेतत्वमिति जातिलक्षणम्। यथा गवादिषु गोत्वम् एकं सत् सकलगोसमवेतमिति। एवमेव हिमः शुक्लः, पयः शुक्लम्, शंखः शुक्लः इति हिमस्य शुक्लता पृथक्, पयसः शुक्लता पृथक् शंखस्य च शुक्लता पृथक् तथापि एक एव शुक्लो नैकसमवेत इति शुक्लत्वं जातिः तथैव गुडस्य तण्डुलस्य च पाकक्रिया पृथक् पृथगस्ति तथापि सर्वत्र पाकस्यैव प्रयोगो जायत इति पाकत्वं जातिः। एवमेव एक एव डित्थशब्दः बालेन केनचित् पृथगुक्तमिति डित्थत्वं जातिः। एवञ्च गुणक्रियाद्रव्यादिकं सर्वं जातिरेवेति जातिरेव शब्दानां प्रवृत्तिनिमित्तमिति मत्वा जातावेव शक्तिं स्वीकुर्वन्ति।

**शक्तिग्राहकाः**

शक्तिग्रहः कथं जायत इति जिज्ञासायामुक्तम्-

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।**
**वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥**

व्याकरणम्, उपमानम्, कोशः, आप्तवाक्यम्, व्यवहारः, वाक्यशेषः, सिद्धपदस्य सान्निध्यमित्यादि सन्ति शक्तिग्राहकानि प्रमाणानि। क्वचित् प्रकृतिप्रत्ययादिव्युत्पत्त्या अस्य पदस्यायमर्थः इति व्याकरणेन ज्ञायते। अज्ञातगवयः कश्चित् को गवयः? इत्यपरं पृच्छति तदा गौरिव गवयः इति उत्तरं श्रुत्वा ज्ञातगोस्वरूपः सः उपमानद्वारा अयं गवयः इति गवयं जानाति। कोशेनापि आत्मभूपदस्य ब्रह्मार्थः इति ज्ञायते। अज्ञातगौः कश्चिदयं गौः इति केनचिदाप्तेनोक्तस्तं गौः इति जानाति। मधुना मत्तः पिकः इत्यादौ मधुशब्दो नानार्थकः किन्तु पिकपदं पक्षिविशेषवाचकमिति निश्चितम्। एवं सिद्धस्य पिकपदस्य सान्निध्यात् मधुपदं वसन्ते शक्तमिति ज्ञायते।

व्यवहारस्तु शक्तिग्राहकं बलवत्तरं प्रमाणमस्ति। बालकः परिवारे निवसन् शनैः शनैः व्यवहारादेव सकलं जानाति। अज्ञः कश्चिद् बालकस्तिष्ठति, तत्रैव कश्चित् उत्तम वृद्धः मध्यमवृद्धं कथयति गामानय इति। तदा स गामानयति। तं गवानयनप्रवृत्तं दृष्ट्वा गामानय इत्यस्य गोवृत्तिकर्मतानिरूपकमाहरणमर्थ इति जानाति, अनेनैवमुक्ते सति, अनेनैवं करणात्। पश्चाच्च गां नय अश्वमानय इत्युक्ते सति गवापहरणे अश्वानयने च तं प्रवृत्तं दृष्ट्वा अश्वपदस्याश्ववृत्तिकर्मता, गां पदस्य गोवृत्तिकर्मता, आनय पदस्याहरणम्, नयपदस्यापाहरणमिति पृथक् पृथगप्यर्थं जानाति। एवं व्यवहारेणापि शक्तिग्रहो जायत इति।

## वाचकभेदाः

वाचकः शब्दस्त्रिधा-यौगिकः, रूढः, योगरूढश्चेति। यत्र प्रकृतिप्रत्ययादिभिर्निष्पन्नः शब्दः प्रकृतिप्रत्ययानुरूपमर्थं प्रत्यायति तदा स शब्दो यौगिकः। तत्रैकोऽवयवो धातुः (प्रकृतिः) अपरश्चावयवः प्रत्ययरूपः उभयोः योगाच्छब्दनिष्पत्तेः शब्दो यौगिको नाम यथोक्तम्- यत्रावयवशक्त्याऽर्थोऽवबुध्यते स यौगिक;। यथा-पाचकादिः।[10] अत्र पच् धातुः ण्वुल्प्रत्ययः इति।

यत्र सत्यपि प्रकृतिप्रत्ययरूपावयवे प्रकृतिप्रत्ययार्थविचारं विनैव केवलं कालात् प्रसिद्धेः अन्यार्थे एव शब्दस्य प्रयोगः स शब्दो रूढ इति। यथोक्तम्।

**यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण बोधः स रूढः .....।**[11]

यथा-गौः मण्डपः इत्यादि। गच्छतीति गौः इति व्युत्पत्त्या गम्धातोः डप्रत्ययेन गौः इति निष्पन्नो गोशब्दश्चलनरूपक्रियावान् तथापि सास्नादिमत्पिण्डरूपेऽर्थे रूढः तथैव मण्डं पिबतीति व्युत्पत्त्या मण्डशब्दपूर्वकंपाधातोः अच् प्रत्ययेन निष्पन्नस्य मण्डपशब्दस्य मण्डपायी इत्यर्थस्तथापि मण्डपशब्दो भवनरूपार्थे रूढः। एवमेवानुकूल-प्रतिकूललावण्यादिः।

यत्रावयवशक्त्याऽर्थबोधः अवयवशक्तिनैरपेक्ष्येणाप्यर्थबोधः स शब्दो योगरूढः। यथोक्तम्-

**यत्र तु अवयवशक्तिविषये समुदायशक्तिरप्यस्ति**
**स योगरूढः ......................................।**[12]

उदाहरणार्थं यथा-पङ्कजम् वक्षोजादिः। पङ्के जातं पङ्कजमिति प्रकृतिप्रत्ययावयवाभ्यां पङ्कजनिकर्तृत्वरूपमर्थं बोधयति। तथैव समुदायशक्त्यादिप्रसिद्धेः कमलरूपमर्थं बोधयति। वक्षोजं वक्षसि जातमिति व्युत्पत्त्या वक्षोजं स्तनमिति किन्तु वक्षसि कदाचिद् घर्मजालमपि जायते किन्तु तद् वक्षोजं नास्ति, अपि तु प्रसिद्धेः वक्षोजमुरोजं (स्तनम्) एवेति।

योगरूढस्थले रूढिर्योगापहारिणी इति न्यायात् यौगिकमर्थं विहाय रूढस्यैवार्थस्य प्रतीतिविषयता भवति। यथा-वृक्षः। वृश्चु छेदने इत्यस्माद्धातोः निष्पन्नो वृक्षशब्दो घर्मच्छेदकः। घर्मच्छेदकं तु छत्रमपि भवति, किन्तु वृक्षपदेन छत्ररूपस्यार्थस्य प्रतीतिर्नैव जायते, वृक्षपदस्य तरुरूपार्थे रूढात्।

एभिस्त्रिभिरपि शब्दैः अभिधावृत्त्या सङ्केतितस्यार्थस्य प्रतीतिर्जायते इति ते शब्दाः वाचकाः तदर्थाश्च वाच्या इति।

## तात्पर्यावृत्तिविवेचनम्

वाचकशब्देन प्रतिपाद्यस्यार्थस्यैव प्रकरणे अभिधया प्रतिपादितानां पदार्थानां परस्परमन्वये सञ्जाते सति निष्पन्नस्य वाक्यार्थस्य सम्पादिकां तात्पर्याख्यामपि वृत्तिं स्वीकुर्वन्ति काव्यशास्त्रिणः। यथा शब्दार्थयोः स्वरूपमुपक्रम्यार्थस्य भेदान् निरूपयता साहित्यकौमुदीकारेण-

**वाच्यादयस्तदर्थाः स्युः ...................**

इति सूत्रे प्रदर्श्य वाच्यलक्ष्यव्यङ्ग्याः इत्युक्त्वा-

**तात्पर्यार्थोऽपि केषुचित्**[13]

इति प्रतिपादितम्। अर्थात् केषाञ्चित् मीमांसकानां मते तात्पर्यार्थोऽपि भवति वाच्य-लक्ष्य-व्यङ्ग्यातिरिक्तः। सोऽपि वाच्यार्थ एवं किन्तु नायमभिधेयार्थः, अपि तु तात्पर्यावृत्ति-गम्यस्तात्पर्यार्थः।

ननु वाच्यार्थस्त्वेवं द्विविधः अभिधेयार्थः तात्पर्यार्थश्च। अभिधेयार्थोऽभिधावृत्तिगम्यः, तात्पर्यार्थश्च तात्पर्यावृत्तिगम्यः। इति कथम्? लक्ष्यार्थः केवलं लक्षणावृत्तिगम्यः, व्यङ्ग्यार्थश्च केवलं व्यञ्जनावृत्तिगम्यः किन्तु वाच्यार्थो वृत्तिद्वयगम्यः कथमिति विशेषजिज्ञासा-यामुच्यते-

अभिधावृत्त्या पदानामर्थबोधो जायते। पदार्थमुपस्थाप्याभिधा विरता जायते शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः इति नियमात्। यथा पदानां समूहो वाक्यं भवति तथा पदार्थानां समूहमात्रं वाक्यार्थो न जायते, अपि तु अपदार्थोऽपि पदार्थैः सम्बद्धः सन् वाक्यार्थो न जायत इति। यथा- घटमानय इति वाक्यमस्ति। अत्र घट+अम्+आनयेति त्रयोंऽशाः। एतेषां समूहस्तु वाक्यम्। किन्तु घटपदस्य घटरूपोऽर्थः, अम्पदस्य कर्मता, आनयपदस्य च आहरणमर्थः। घटकर्मताऽऽहरणमिति तु न वाक्यार्थः, अपितु घटमानय इति वाक्यस्य घटवृत्तिकर्मतानिरूपकमाहरणमित्यर्थः। अस्मिन् वाक्यार्थे वृत्तिः, निरूपकमिति च न कस्यापि पदस्यार्थाविति पदार्थापदार्थाभ्यां वाक्यार्थः इति।

ननु वाक्यार्थे पदार्थः कुत आयातीति? चेदुच्यते- शाब्दबोधे चैकपदार्थेऽ परपदार्थस्य संसर्गः संसर्गमर्यादया भासते, इति नियमः। एवं वाक्यार्थे पदार्थातिरिक्तं संसर्गोऽपि भवति। अर्थात् पदार्थानां परस्परमन्वयो जायते। यथाऽम्पदस्य घटे वृत्तितासम्बन्धेनान्वयः, आनयपदस्य च निरूपकतासम्बन्धेन घटमित्यत्रान्वयः। एवमन्वयसम्पादकस्य सम्बन्धस्यापि वाक्यार्थे समागमात्, अपदार्थोऽपि विशेषवपुः वाक्यार्थस्तात्पर्यार्थरूप इति।

अस्य च तात्पर्यार्थस्य सम्पादनार्थमभिधातिरिक्ता तात्पर्यानाम्नी पृथग्वृत्तिः स्वीक्रियते। यथोक्तं वृत्तौ-

केषाञ्चिन्मते वाक्यार्थस्तात्पर्याख्यवृत्तिगम्यः। एकैकपदार्थबोधेनाभिधाया विरतत्वात् वाक्यार्थस्वरूपस्य पदार्थानामन्वयबोधनाय तात्पर्यनाम्नी वृत्तिः। तदर्थस्तात्पर्यार्थः। तद्बोधकं तु वाक्यमित्यभिहितान्वयवादिनः।[14]

साहित्यकौमुदीकारस्तु तात्पर्यां वृत्तिमवश्यमेव विवादं विनैव स्वीकरोति। अभिहितान्वयवादिनः इत्युक्त्वा केवलमभिहितान्वयवादिनामेव मतमुपस्थापितमस्ति ग्रन्थकारेण। अतएव साहित्यकौमुदीकारस्तात्पर्यामङ्गीकरोति न वेति सन्देह एव न जायते।

काव्यप्रकाशकारस्तूभयमपि मतमुपस्थापयति। पूर्वं सूत्रे तात्पर्यार्थोऽपि केषुचित् इति सूत्रयित्वा वृत्तौ- आकाङ्क्षायोग्यतासन्निधिवशाद् वक्ष्यमाणस्वरूपाणां पदार्थानां समन्वये तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थे समुल्लसतीति अभिहितान्वयवादिनां मतम्। वाच्य एव वाक्यार्थ इति अन्विताभिधानवादिनः।[15]

आचार्यो विश्वनाथोऽपि निर्विवादरूपेण केवलमभिहितान्वयवादिनामेव मतमुपस्थापयति। यथा-

**तात्पर्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने।**
**तात्पर्यार्थं तदर्थं च वाक्यं तद्बोधकं परे।**

इति सूत्रयित्वा- अभिधाया एकैकपदार्थबोधनविरामाद् वाक्यार्थरूपस्य पदार्थान्वयस्य बोधिका तात्पर्या नाम वृत्तिः, तदर्थश्च तात्पर्यार्थः।[16]

धनिको धनञ्जयश्च तात्पर्यां वृत्तिं तथा स्वीकुरुतः यथा व्यञ्जनाया अप्यावश्यकता न स्यात्, तात्पर्यावृत्त्यैव रसादिध्वनेरपि सिद्धेः। यथा-

**एतावत्येव विश्रान्तिस्तात्पर्यस्येति किं कृतम्।**
**यावत्कार्यप्रसारित्वात्तात्पर्यं न तुलाधृतम्॥**
**पौरुषेयस्य वाक्यस्य विवक्षापरतन्त्रता।**
**वक्त्रभिप्रेततात्पर्यमतः काव्यस्य युज्यते॥**[17]

अर्थात् यावद् वक्त्रभिप्रेतं तावत्सर्वेषामर्थानां प्रतीतिः तात्पर्यया भवितुमर्हति यतो हि तात्पर्यं तुलाधृतं (परिमितम्, एतावत्येवार्थस्य प्रतीतिस्तात्पर्यया भविष्यतीति सीमितं) नास्ति। एवं तात्पर्याविषये काव्यशास्त्रिषु धनिकधनञ्जययोः विशिष्टा स्थितिः वर्तते।

**अभिहितान्वयवादिनः**

अभिहितान्वयवादिनः सन्ति भाट्टमीमांसकाः। ते कथयन्ति यत् उक्तानां पदार्थानां परस्परमन्वयो भवति, अभिहितानां पदार्थानामन्वयो भवतीति ये वदन्ति ते अभिहितान्वय-वादिनः इति व्युत्पत्तेः। अर्थाद् वाक्यघटकानां पदानां पृथक्-पृथक् अर्थबोधे सञ्जाते सति आकाङ्क्षा-योग्यता-सन्निधिवशात् तेषां पदार्थानामन्वयो भवति। पूर्वं तु पदेभ्योऽनन्वितानामेव पदार्थानामुपस्थितिः, पश्चाच्च आकाङ्क्षा-योग्यता- सन्निधीनां साहाय्येन तात्पर्यावृत्तिद्वारा तेषां परस्परमन्वये वाक्यार्थबोधः।

आकाङ्क्षा श्रोतुः जिज्ञासारूपः। अर्थाद् वाक्यघटकमेकं पदं श्रुत्वा वाक्यार्थबोधो न जायते, अपितु वाक्यार्थज्ञानार्थं श्रुतं पदं वाक्यघटकमपरं पदमपेक्षते। यथा- गौः गच्छति इति वाक्यतः गौः इति पदे श्रुते सति किं गौः इतिरूपेण वाक्यबोधार्थं गौः पदं गच्छतीत्ति पदमपेक्षते। गौः गच्छतीति सम्पूर्णे वाक्ये श्रुते सति वाक्यार्थ-बोधः। एवमपदस्य पदस्य पदार्थस्य वा श्रोतुं जिज्ञासा आकाङ्क्षेत्युच्यते। यथोक्तं साहित्यदर्पणे-

आकाङ्क्षा प्रतीतिपर्यवसानविरहः। स च श्रोतुर्जिज्ञासारूपः। निराकाङ्क्षस्य वाक्यत्वे गौरश्वः पुरुषो हस्ती इत्यादीनामपि वाक्यत्वं स्यात्।[18]

योग्यता पदार्थानां परस्परसम्बन्धे बाधाभावः। अतएव वह्निना सिञ्चति इत्यादौ वह्निकरणकसेकस्यासम्भवात् बाधाऽस्तीति योग्यताया अभावान्न वाक्यत्वम्। यथोक्तं दर्पणे-

योग्यता पदार्थानां परस्परसम्बन्धे बाधाभावः। पदोच्चयस्यैतदभावेऽपि वाक्यत्वे वह्निना सिञ्चति इत्याद्यपि वाक्यं स्यात्।[19]

आसत्तिः बुद्धेः अविच्छेदः। बुद्धिविच्छेदस्तु कालमहिम्ना, पदयोर्मध्येऽनुपयोगि-पदोपादानेन च। कालमहिम्ना यथा- अद्योच्चारितस्य देवदत्तपदस्य दिनान्तरोच्चारितेन

गच्छतीति पदेन न सङ्गतिरिति बुद्धेः विच्छेदो जायते। अनुपयोगिपदोपादानेन यथा-गिरिर्भुक्तमग्निमान् देवदत्तेन। अत्र गिरिः अग्निमान् इत्यनयोः पदयोर्मध्ये भुक्तमित्यनुपयोगिपदोपादानम्, तथा च भुक्तं देवदत्तेन इति पदयोरपि अग्निमान् इत्यनुपयोगिपदमिति नैतेषां समवाये वाक्यत्वम् बुद्धविच्छेदरूपसन्निधेरभावात्। यथोक्तम्-

आसत्तिर्बुद्ध्यविच्छेदः। बुद्धिविच्छेदेऽपि वाक्यत्वे इदानीमुच्चरितस्य देवदत्तशब्दस्य दिनान्तरोच्चरितेन गच्छतीति पदेन संगतिः स्यात्।[20]

**अन्विताभिधानवादिनः**

अन्वितानामभिधानमिति ये वदन्ति तेऽन्विताभिधानवादिनः सन्ति प्रभाकरादयो मीमांसकास्तेषां मतानुसारमभिधया पदार्थबोधानन्तरं पदार्थानामन्वयो न जायते, अपितु पूर्वत एव पदानि अन्वितानि भवन्ति। तेषामन्वितानां पूर्वतः सम्बद्धानामेवाभिधानं जायते। तेषां मते वाक्यार्थ एव वाच्यार्थः अखण्डेनैव वाक्येनाखण्डस्य वाक्यार्थस्य प्रतीतिः। वाक्यार्थज्ञानं तु व्यवहारतो जायते। यथोक्तं काव्यप्रकाशे मम्मटभट्टैः -

**शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति।**<br>
**श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया।**<br>
**अन्यथानुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम्।**<br>
**अर्थापत्त्यावबोधेत सम्बन्धं त्रिप्रमाणकम्।।**

अर्थात् शब्दश्च वृद्धश्च अभिधेयश्च तान्, वृद्धः- उत्तमवृद्धः, मध्यमवृद्धश्चेति। एवमज्ञो बालकः उत्तम- मध्यमवृद्धौ चाक्षुषप्रत्यक्षेण पश्यति। ततश्च उत्तमवृद्धेन गामानय इति मध्यमवृद्धम्प्रत्युक्ते सति तच्छब्दं श्रावणप्रत्यक्षविषयीकरोति। ततश्च मध्यमवृद्धेन गवानयनप्रवृत्तमुपलभ्य गोव्यक्तिं चाक्षुषप्रत्यक्षेण पश्यति। ततश्च स बालकः उत्तमवृद्धवाक्यानन्तरं मध्यमवृद्धं तत्प्रवृत्तं दृष्ट्वा तच्चेष्टया अस्य वाक्यस्य (गामानयेत्यस्य) अयं (गवानयनम्) अर्थः, अनेनैवमुक्ते सति अनेनैवं करणात् इत्यनुमानं करोति, इदमपि अनुमिनोति- अयम् (मध्यमवृद्धः) एवं (गामानयेति पदस्य गवाहरणमर्थः इति) रूपेण प्रतिपन्नः, अनेन (उत्तमवृद्धेन) एवमुक्ते सति अनेन (मध्यमवृद्धेन) एवं करणात्। ततश्चार्थापत्त्या गामानय इति पदस्य गवानयनमर्थः इति वाच्यवाचकसम्बन्धमवधारयति।

एवमखण्डेन वाक्येन अखण्डस्य वाक्यार्थस्य बोधो बालकस्य जायते। अतः वाच्यार्थः एव वाक्यार्थो न तु पदार्थानां वैशिष्ट्यमिति प्राभाकरा मीमांसकाः वदन्ति।

नन्वेवम् अन्विते शक्तिरिति स्वीकारे गामानय इत्यत्र आनयान्विते गां पदम्, गामित्यनेनान्वितमानयपदमिति प्रथमं बोधः। ततश्च गां नय इति श्रुते सति इदमेव तत्

गां पदं यत गामानयेत्यत्रास्ति, तथा च अश्वमानय इत्यत्र तदेवेदमानयपदं यत् गामानय इत्यत्रास्ति पुनश्च अश्वं नय इति श्रुते तदेवं नयपदं यद् गां नय इत्यत्रास्ति इति बोधः कथं जायेत ? अर्थात् एकेनार्थेनान्विते शक्तिग्रहस्वीकारे पदार्थान्तरेणान्वितेन कथं शाब्दबोधः ? इत्युच्यते- एकस्मिन् वाक्ये एकेनान्वितमर्थं दृष्ट्वा अर्थान्तरेणान्विते सति तदेवेदं पदमिति ज्ञानं- प्रत्यभिज्ञाबलेन भविष्यति। यदुक्तम्-

यद्यपि वाक्यान्तरप्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन तान्येवैतानि पदानि निश्चीयन्ते इति पदार्थान्तरमात्रेणान्वितः सङ्केतगोचरः तथापि सामान्यावच्छादितो विशेषरूप एवासौ प्रतिपद्यते व्यतिषक्तानां पदार्थानां तथाभूतत्वादित्यन्विताभिधानवादिनः।[21]

अनयोरभिहितान्वयाऽन्विताभिधानवादयोः अभिहितान्वयवादिनामेव मतं काव्यशास्त्रिणामभितमिति पूर्वमेव स्पष्टीकृतमस्ति।

## लक्ष्यलक्षकविवेचनम्

लक्षणोपाधिकः शब्दो लाक्षणिकः (लक्षकः) तदर्थश्च लक्ष्य इति पूर्वमुक्तम्। ननु केयं लक्षणा यदुपाधिकः शब्दो लाक्षणिकः, यत्प्रतिपाद्यश्चार्थो लक्ष्य इति लक्षणास्वरूप-मुपस्थाप्यते-

## लक्षणास्वरूपम्

लक्षणायाः किं स्वरूपमिति जिज्ञासायां साहित्यकौमुदीकारेण श्रीविद्याभूषणेनोक्तम्-

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया।।**[22]

अत्र कारिकायास्त्रयोंऽशाः- लक्षणम्, लक्षणायां हेतवः, लक्ष्यं, स्वरूपकथनञ्चेति। लक्ष्यं तु लक्षणा आरोपिता क्रिया इति तु स्वरूपकथनम्, शब्दार्थनिष्ठताविचारः। अन्योऽर्थो यत् लक्ष्यते इति लक्षणम्। यत् लक्ष्यते इत्यस्य यया लक्ष्यते इत्यर्थः।

## अन्योऽर्थः

अन्यः अर्थः इत्यत्रान्यपदस्य मुख्यार्थभिन्नः अर्थः इत्यर्थोऽस्तीति साहित्यकौमुदीकार-मतमस्ति। यथोक्तम्-

...............मुख्यार्थबाधायामाधाराधेयभवादौ सामीप्यादौ च सम्बन्धे रूढेः प्रयोजनाच्च हेतोः मुख्येनामुख्योऽन्योऽर्थो यया लक्ष्यते सा लक्षण।[23]

काव्यप्रकाशकारस्य मम्मटस्यापीदमेवाभिमतमस्ति। मुख्यार्थबाधे तद्योगे इत्यादि सूत्रयित्वा मुख्येनामुख्योऽर्थो लक्ष्यते यत् स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा[24]

कृतायां विचारणायां ज्ञायते यत् नहि केवलं मुख्यार्थभिन्नोऽर्थः अन्यार्थः अपि तु मुख्यार्थतावच्छेदकातिरिक्तधर्मावच्छिन्नत्वरूपोऽर्थः इति, अन्यथा-

कदली कदली करभः करभः
करिराजकरः करिराजकरः।
भुवनत्रितयेऽपि बिभर्ति तुला-
मिदमूरुयुगं न चमूरुदृशः।।[25]

इत्यत्र दोषः स्यात्। यतो हि द्वितीयकदल्यादिशब्दाः बाधितमुख्यार्थाः शैत्यजाड्य-विशिष्टकदलीत्वादिरूपानर्थान् प्रतिपादयन्ति न तु कदल्यादिभिन्नार्थानुपस्थापयन्तीति। मुख्यार्थतावच्छेदकातिरिक्तधर्मावच्छिन्नत्वरूपार्थस्वीकारे न दोषः। यतो हि द्वितीयस्यापि कदलीपदस्य मुख्योऽर्थः कदली, मुख्यार्थता च कदल्याम्, तदवच्छेदकं कदलीत्वम्, तदतिरिक्तो धर्मः शैत्यजाड्यविशिष्टकदलीत्वम्, तदवच्छिन्ना च कदलीति सङ्गतिः स्यात्।

कारिकास्थहेत्वंशे मुख्यार्थबाधे, तद्योगे, रूढितः प्रसिद्धेश्चेति त्रयोंऽशाः। एकैकशः विचारे-

## मुख्यार्थबाधः

मुख्यस्यार्थस्य बाधः इति मुख्यार्थबाधः। बाधस्तु अनुपपत्तिः। अयं मुख्यार्थबाधो लक्षणायां प्रथमो हेतुः। अयं भावः- यदा वक्ता गङ्गायां घोषः इत्यादीनां प्रयोगं करोति तदा श्रोता गङ्गापदस्य भगीरथरथखातावच्छिन्नजलप्रवाहअधिकरणता सप्तम्याः, घोषस्य च आभीरपल्लिः इति अर्थ इति शक्त्या (अभिधया) जानाति। तदा गङ्गाधिकरणको घोषः इति वाक्यार्थमवधारयति। ततश्च जलप्रवाहः (अस्थिरः) घोषस्याधिकरणं कथमिति तन्मनसि सन्देहो जायते। पुनः-पुनः कृतेऽर्थानुसन्धानेऽपि त एवार्था आयान्ति येन वाक्यार्थे गङ्गाघोषयोराधाराधेयभावसम्बन्धे सन्देह एव जायते। अयमेव सन्देहो मुख्यार्थस्य बाध इति। यदा शक्तिग्राहकैः व्याकरणकोशादिभिः समुपस्थापितैरप्यर्थैः वाक्यार्थो न घटते तदा अर्थप्रतिपादिकां शक्तिं प्रति सावधानो भवति श्रोता। विचारयति चानयाभिधया शक्त्या प्रतिपादितैरर्थैर्यदि न जायते वाक्यार्थसङ्गतिस्तदा अपरायाः शक्त्याः प्रयोगः कर्त्तव्य इति तदा स अभिधां विहाय लक्षणां गृह्णाति। लक्षणया च गङ्गापदस्य तटरूपमर्थं प्रतिपाद्य तटघोषयोराधाराधेयभावसम्बन्धस्य सम्पन्नत्वात् वाक्यार्थसङ्गतिः जायते।

## तद्योगे

तस्य योग इति तद्योगः, तस्मिन् तद्योगे। मुख्यार्थस्य योगे इति लक्षणायां द्वितीयो हेतुः। अयं भावः- लक्षणया यस्य कस्याप्यर्थस्योपस्थितिर्न जायते, अपि तु मुख्यार्थेन सम्बद्धस्यैव। अन्यथा गङ्गापदेन यमुनारूपार्थस्यापि प्रतीतिः स्यादिति। अतएव-

## शक्यसम्बन्धो लक्षणा[26]

यत्किञ्चिच्छक्यार्थप्रतियोगिकः यत्किञ्चिदर्थानुयोगिकः सम्बन्धविशेषो लक्षणार्थ इति वदन्तः पण्डितराजादयः सङ्गच्छन्ते। स च सम्बन्धः क्वचित् सामीप्यम्, सादृश्यम् स्वस्वामिभावः, अवयवावयविभावः, तादार्थ्यंतात्कर्म्यादिकञ्चेति।

## रूढिः प्रयोजनम्

रूढिप्रयोजनयोरन्यतरं लक्षणायां तृतीयो हेतुः। लक्षणा कथं भवति? वक्ता वाचकं शब्दं विहाय लाक्षणिकस्य पदस्य प्रयोगमेव कथं करोति? इति। उच्यते- क्वचिच्च वक्ता रूढेः प्रसिद्धेः वाचकं पदं विहाय लाक्षणिकं प्रयुनक्ति। यथा कलिङ्गः साहसिकः इति। अत्र कलिङ्गपदं देशविशेषे शक्तम्। साहसन्तु सजीवधर्मः इति देश-सजीवधर्मयोः कथमभेदः? इति मुख्यार्थबाधायां समुपस्थितायां कलिङ्गपदस्य कलिङ्गदेशवासिनि लक्षणा।

क्वचिच्च लक्षणायां प्रयोजनं हेतुः। तटे घोषः इति वक्तव्ये गङ्गायां घोषः इति प्रयोगे केनचिद् विशेषेण कारणेन भवितव्यम्। तच्च कारणमर्थविशेषस्य प्रतिपादनमिति वाचकशब्दप्रयोगेण यस्यार्थस्य न तथा प्रतीतिः तस्यार्थस्य प्रतिपादनार्थमेव वाचकशब्दं (तटादिकं) विहाय लाक्षणिकस्य (गङ्गादिपदस्य) प्रयोगः। यथा वक्ता घोषे शैत्यपावनत्वादिकं प्रतिपादयितुमिच्छति। शैत्यपावनत्वादिकं तु गङ्गाधर्माः न तटधर्मा इति गङ्गापदं विना तटेन शैत्यपावनत्वादेर्न प्रतीतिरिति तटे घोषः इति वक्तव्ये गङ्गायां घोष इति लाक्षणिकप्रयोगः। एवं प्रयोजनमपि लक्षणायामेको हेतुः।

## लक्षणाऽऽरोपिता क्रिया

अत्र लक्षणा लक्ष्यम्। आरोपिता क्रियेति स्वरूपकथनम्। यथोक्तं श्रीमम्मटभट्ट-पण्डितराजजगन्नाथयोर्मतभेदविमर्शे श्रीवायुनन्दनपाण्डेयैः -

अन्योऽर्थो यल्लक्ष्यते सा लक्षणा इति हि लक्षणम्, मुख्यार्थबाधादित्रयं हेतुः, आरोपिता क्रिया इति पदद्वयं न लक्षणघटकमपि तु स्वरूपकथनम्।[27]

अयं भावः- शब्दशक्ति (वृत्ति) प्रकरणे लक्षणा प्रतिपादिताऽस्ति। साहित्यदर्पण-कारेणापि तिस्त्रः शब्दस्य शक्तयः इति सामान्येनोक्तं लक्षणायाः शब्दशक्तित्वम्, किन्तु नेयं लक्षणा शब्दस्य शक्तिः, अपि तु अर्थस्येति। अन्यथा अभिधेयमर्थम्प्रतिपाद्य शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः इति क्षीणायामभिधायां सकृदुच्चरितः शब्दो न वृत्तिद्वयमर्हति इति नियमात् अभिधानन्तरं लक्षणायाः व्यापारत्वापत्तेः। अतएव व्याख्यातं वृत्तौ-

मुख्येनामुख्योऽन्योऽर्थो यया लक्ष्यते सा लक्षणा नाम क्रिया वृत्तिरर्थनिष्ठाप्यर्पिता शब्दे।[28]

लक्षणानामकोऽर्थव्यापारः शब्दव्यापारे तथाऽऽरोपितोऽस्ति यथाऽऽलङ्कारिकैः मुखे चन्द्रत्वमारोप्यते। लक्षणायाः अर्थनिष्ठता प्रायः सर्वैरेवालङ्कारिकैः स्वीक्रियते। यथा काव्यप्रकाशे मम्मटभट्टेनापि-

मुख्येन अमुख्योऽर्थो लक्ष्यते यत् स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा[29]

पण्डितराजजगन्नाथोऽपि- शक्यसम्बन्धो लक्षणा इति लक्षणां लक्षयाञ्चक्रे। स च शक्यसम्बन्धः यत्किञ्चिच्छक्यार्थप्रतियोगिक; यत्किञ्चिदर्थानुयोगिकः सम्बन्धविशेष इति। एवञ्चार्थशक्तित्वमेव लक्षणायाः सिद्धम्। साहित्यदर्पणे तु तिस्त्रः शब्दस्य शक्तयः इत्यस्य प्रसङ्गे लक्षणां लक्षयता विश्वनाथेन शब्दशक्तित्वमेव प्रतिपादितम्- सा शब्दस्यार्पिता स्वाभाविकेतरा ईश्वरानुद्भाविता वा शक्तिर्लक्षणा नाम।[30]

वस्तुतस्तु लक्षणाऽर्थशक्तिरेव। अतएव प्रस्तुतस्य ग्रन्थस्य कर्ता विद्याभूषणस्तु अर्थशक्तित्वमेव स्वीकरोति, यथा पूर्वं प्रतिपादितम्।

**लक्षणा गौणी**

वृत्तिविषये विविधविधाः विवादाः दृश्यन्ते शास्त्रकारेषु। केचित्तु केवलामभिधामेव स्वीकुर्वन्ति। ते सन्ति मीमांसकाः ये अभिधयैव सर्वेषामर्थानामुपस्थितिं प्रतिपादयन्ति-

**सोऽ यमिषोरिव दीर्घदीर्घतरोऽभिधा व्यापारः।**[17]

यथा बलवता केनचिद् योद्ध्रा प्रतिपक्षिनं प्रेरितः इषुः एकेनैव वेगव्यापारेण कर्मच्छेदम्, उरोभेदम्, प्राणहरणञ्च रिपोः करोति तथैव एकेनैवाभिधांव्यापारेण शब्दः पदार्थोपस्थितितात्पर्यार्थनिरूपण-वाक्यार्थज्ञानादिकं किं बहुना व्यङ्ग्यार्थज्ञानादिकञ्चोपस्थापयति। अतोऽभिधैव सर्वविधार्थप्रतिपादिका शब्दवृत्तिः।

अपरे तु मुख्यामुख्यभेदेन वृत्त्योः द्वैविध्यं प्रतिपादयन्ति। तेषां मतानुसारं मुख्या वृत्तिरभिधा, अमुख्या च लक्षणेति। एके तु अभिधा लक्षणा तात्पर्या चेति वृत्तित्रैविध्यं प्रतिपाद्य वाच्यलक्ष्यातिरिक्तानां तात्पर्यव्यङ्ग्यार्थानां प्रतिपादनं तात्पर्ययैव कुर्वन्ति। यथा-

**एतावत्येव विश्रान्तिस्तात्पर्यस्येति किं कृतम्।**
**यावत्कार्यप्रसारित्वात् तात्पर्यं न तुलाधृतम्॥**[31]

इति धनिकधनञ्जयौ। अतएव यदि च शब्दश्रुतेरनन्तरं यावानर्थो लभ्यते तावति शब्दस्याभिधैव व्यापारः ......... तर्हि कस्माच्च लक्षणा? लक्षणीयेऽप्यर्थे दीर्घदीर्घतराभिधाव्यापारेणैव प्रतीतिसिद्धेः।[32] इति काव्यप्रकाशकारेणोक्तत्वात्।

आलङ्कारिकास्तु अभिधा-लक्षणा-व्यञ्जनातिरिक्तं तात्पर्यानाम्नीं तुरीयामपि वृत्तिं स्वीकुर्वन्ति-

**वाच्यादयस्तदर्थाः स्युः तात्पर्यार्थोऽपि केषुचित्।**[33]

केचन एवमपि सन्ति ये मुख्यार्थबाधे सति स्वीक्रियमाणायामपरायां शक्त्यां लक्षणां लक्षणातिरिक्तां गौणीं च स्वीकुर्वन्ति।

**अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।**
**लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता॥**[34]

गौणीलक्षणयोः पृथग्वृत्तितावादिनस्तु भाट्टमीमांसकाः प्राभाकराश्च सन्ति। तत्र गौणीलक्षणयोर्भेदो यथा भाट्टानां मते-

**भाट्टमतम्**

आचार्याः पुनः अग्निर्माणवकः इत्यत्राग्निगतपैङ्गल्यादिगुणसादृश्यान्माणवकेऽग्निशब्दप्रवृत्तिरिति गौणीनामवृत्त्यन्तरमुररीचक्रिरे। तथा चोक्तम्-

**अग्नित्वलक्षितादर्थाद् यत् पैङ्गल्यादि गम्यते।**
**तेन माणवके बुद्धिः सादृश्यादुपजायते॥**[35]

**प्राभाकराणां मतम्**

प्राभाकरास्तावदाहुः- लक्षणातो गौणस्याऽयं भेदः-गौणे हि पदप्रयोगादेव गुणोपेते तात्पर्यम्। लक्षणायां तु पदार्थोपलब्धे सम्बन्धिनि पदतात्पर्यमिति।[36]

आलङ्कारिकास्तु गौणीं पृथग्वृत्तित्वेन नाङ्गीकुर्वन्ति, अपि तु गौणी लक्षणाभेद एव। यत्र सादृश्येतरसम्बन्धैः लक्षणा सा शुद्धा, यत्र तु सादृश्यसम्बन्धेन लक्षणा सा गौणीति काव्यप्रकाशसाहित्यदर्पणादिषु प्रतिपादितम्। यथा-

**सादृश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि।**
**सादृश्यात्तु मता गौण्यः ..................................॥**[37]

इति विश्वनाथः। मम्मटोऽपि यथा-

**भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा।**
**गौणो शुद्धौ च विज्ञेयौ ..................................॥**[38]

साहित्यकौमुदीकारस्यापीदमेव मतमस्ति-

**भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा।**
**गौणौ शुद्धौ च विज्ञेयौ ..................................॥**[39]

एवं वृत्तिविषये गौणीलक्षणयोर्विषये समुपस्थितं विवादं दर्शं दर्शं तयोर्भेदो विचार्यते।

**गौणीलक्षणयोर्भेदः**

1- लक्षणायामन्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा कारणं भवति। गौण्यां तु नायं नियमो दृश्यते। तत्र सादृश्यमात्रेणैव तथा व्यवहारात्।

2- लक्षणायां शक्यसम्बन्धो भवति गौण्यां तु गुणसम्बन्ध इति। यद्वा लक्षणायामविनाभावसम्बन्धः गौण्यां तु गुणसम्बन्ध इति। इत्यस्ति गौणीलक्षणयोर्भेद इति।

## विवेचनम्

तत्र यदुक्तं गौण्यामनुपपत्तिर्न भवति तन्न युक्तम्, यतो हि यदि गौण्यामनुपपत्तिर्न स्यात्तदा गौर्वाहीकः, अग्निर्माणवकः, मुखं चन्द्रः इत्यादिगौण्युदाहरणेषु स्यादेवाभेदसम्बन्धेनान्वयः, न च भवति इति सिद्धैव तत्राभेदसम्बन्धस्यानुपपत्तिरिति।

पुनश्च यदुक्तं गौण्यां सादृश्यसम्बन्धो भवति लक्षणायान्तु शक्यसम्बन्धः अविनाभावसम्बन्धो वेति तदपि न युक्तम्- लक्षणायामपि सादृश्यदर्शनात्-

**अभिधेयेन सम्बन्धात् सादृश्यात्समवायतः।**
**वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता।।**

गौण्यामपि शक्यसम्बन्धस्य दर्शनात्। यतो हि गौर्वाहीकः इत्यादिष्वपि लक्षणया गोपदेन गोगतजाड्यमान्द्यादयो लक्ष्यन्ते त एव जाड्यमान्द्यादयो वाहीकार्थस्याभिधाने प्रवृत्तिनिमित्तत्वमुपयान्ति इति शक्यसम्बन्धस्यापलापानर्हत्वात्।भवतु नाम तत्र न साक्षात् **शक्यसम्बन्धः परम्परया शक्यसम्बन्धस्यावश्यमेवाङ्गीकारात्। इति सर्वं** सङ्कलय्यास्मद्गुरुचरणैः श्रीवायुनन्दनपाण्डेयैः सम्भाविता लक्षणाभेदाः काव्ये तदुपयोगश्च इति निबन्धे सुस्पष्टं प्रतिपादितम्-

अपि च लक्षणायां शक्यसम्बन्धो निमित्तम्, गौण्यां च गुणसम्बन्धो निमित्तम्। लक्षणायां साक्षात् शक्यसम्बन्धः, गौण्यां च परम्परयेति बहवो भेदा द्वयोः। अतो गौणी पृथग्वृत्तिः। इति पूर्वपक्षमुपस्थाप्य तत्खण्डनं कृतम्

यथा लक्षणा मुख्यार्थबाध- मुख्यार्थयोग-रूढिप्रयोजनान्यतरनिमित्तत्वे सति प्रवर्तते तथैव गौण्यपीति न गौणी पृथग्वृत्तिरित्यालङ्कारिकाः। साक्षात्सम्बन्धे विशिष्टबुद्धिनियामक-सम्बन्धे सत्येव लक्षणेति नियमाभावाच्च। उपकृतं बहु तत्र किमुच्यते इत्यादौ विपरीतलक्षणायां तन्निरूपितबोधाधिकरणत्वरूपपरम्परासम्बन्धेनापि लक्षणास्वीकारात्।[40]

एवं गौणी न लक्षणातिरिक्ता वृत्तिः, अपि तु लक्षणान्यतरभेदरूपेति सिद्धम्।

## लक्षणा तेन षड्विधा

लक्षणाभेदनिरूपणप्रस्तावे साहित्यकौमुदीकारेण षड्भेदा निरूपिताः सन्ति-

1- उपादानलक्षणा - अजहत्स्वार्था।

2- लक्षणलक्षणा - जहत्स्वार्था, भागलक्षणा।

3- सारोपा लक्षणा।

4- साध्यवसाना लक्षणा।

5- शुद्धा लक्षणा।

6- गौणी लक्षणा।

एषु षड्भेदेषु सारोपा, साध्यवसाना चेति भेदद्वयमपि क्वचित् सादृश्येतरसम्बन्धेन, क्वचिच्च सादृश्यसम्बन्धेन भवति इति सादृश्यसम्बन्धेन जायमाने सारोपासाध्यवसाने चेति पूर्वोक्ते उपादान- लक्षणे इति च इति चत्वारो भेदाः शुद्धालक्षणा इति नाम्ना उच्यन्ते । एवम् -

1- उपादानलक्षणा।

2- लक्षणलक्षणा।

3- सारोपा लक्षणा।

4- साध्यवसाना।

चेति चत्वारो शुद्धाभेदाः।

1- सारोपा गौणी। 2- साध्यवसाना गौणी चेति द्वौ गौणीभेदौ। इति सङ्कलने षड्भेदाः।

वस्तुतस्तु लक्षणा तावद् द्विविधा- 1-शुद्धा 2- गौणी चेति। प्रत्येकस्यापि सारोपासाध्यवसाने इति द्वौ भेदौ। एवम् सारोपा शुद्धा साध्यवसाना गौणी इति चत्वारो भेदाः। शुद्धायाः सारोपसाध्यवसानभेदौ उपादानलक्षणभेदद्वयेन विभक्ताविति निम्नशाखावृक्षेण ज्ञायते-




एवम्-

1- उपादानसारोपा शुद्धा।

2- लक्षणसारोपा शुद्धा।

3- उपादानसाध्यवसाना शुद्धा।

4- लक्षणसाध्यवसाना शुद्धा।

5- लक्षणसारोपा गौणी।

6- साध्यवसाना गौणी

इति षड्भेदाः लक्षणायाः इत्युक्तम्-

**लक्षणा तेन षड्विधा**[41]

प्रायः काव्याशास्त्रिषु- अग्निपुराणकार-व्यास- भामह-वामनाऽऽनन्दवर्धनाचार्याऽभिनवगुप्त-- मुकुलभट्टाऽच्युतराय-धनिक-मम्मट-जयदेवाऽप्पयदीक्षित- विश्वनाथ पण्डितराजजगन्नाथादिभिर्लक्षणा निरूपिताऽस्ति, केनचित्प्रत्यक्षरूपेण केनचिच्चाप्रत्यक्षरूपेणेति। एषु केचन षड्भेदाः, केचन सप्तभेदाः, केचन नव, केवन द्वादशभेदा इति स्वीकुर्वन्ति किन्तु षड्भेदप्रतिपादकानां संख्या अधिका वर्तते।

वाग्देवतावतारेण श्रीमम्मटभट्टेन लक्षणायाः षड्विधत्वमेव प्रतिपादितमस्ति। तत्क्रमोऽपि तथैवास्ति यथा साहित्यकौमुद्यां विद्याभूषणस्य। मुकुलभट्टश्चाभिधावृत्तिमातृकायं लक्षणाया षड्विधत्वं प्रत्यपादयतत्-

**वक्तुर्वाक्यस्य वाच्यस्य रूपभेदावधारणात्।**
**लक्षणा षट्प्रकारैषा विवेक्तव्या मनीषिभिः॥**[42]

पण्डितराजजगन्नाथेनापि रसगङ्गाधरे प्रयोजनवत्याः लक्षणायाः षड्भेदाः प्रतिपादिताः सन्ति। तद्यथा-लक्षणा द्विविधा निरूढा प्रयोजनवती च। प्रयोजनवती द्विविधा गौणी शुद्धा च। तत्र गौणी सारोपासाध्यवसानाभ्यां द्विविधा। शुद्धा चतुर्विधा जहत्स्वार्था, अजहत्स्वार्था, सारोपा, साध्यवसाना चेति।

काव्यशास्त्रिषु चतुर्दशभाषाविलासिनीभुजङ्गमो विश्वनाथस्तु अशीतिप्रकारां लक्षणां प्रतिपादयामास। तद्यथा- लक्षणा तावद् द्विविधा रूढ़िलक्षणा, प्रयोजनवतीलक्षणा चेति। द्विविधेऽप्येते उपादान-लक्षणभेदाद्द्विविधेति चतुर्विधा लक्षणा। प्रत्येकमपि ताः आरोपाध्यवसानाभ्यां द्विधेति अष्टौ भेदाः। सादृश्येतरसम्बन्धेनैत शुद्धायाः अष्टौ, सादृश्यसम्बन्धेन लक्षणांयां गौणीलक्षणाया अपि एते एवाष्टौ भेदा इति षोडशप्रकारा लक्षणा। रूढि-प्रयोजनदिशा सङ्कलनेन पूर्वोक्तेषु षोडशभेदेषु अष्टौ भेदाः रूढिलक्षणायाः, अष्टौ च प्रयोजनबत्याः सन्ति। एतेषु प्रयोजनवतीभेदेषु व्यङ्ग्यस्य गूढतया अगूढतया च सत्वात् प्रत्येकस्यापि भेदद्वयमिति षोडशभेदाः प्रयोजनवत्याः, तत्रापि फलस्य (व्यङ्ग्यस्य), क्वचिद् धर्मिगतत्वम्, क्वचिच्च धर्मगतत्वमिति द्विधा प्रतिपादनात् द्वात्रिंशद्भेदाः प्रयोजनवत्याः, रूढिलक्षणायाश्च पूर्वमष्टौ भेदा उक्ता इति सङ्कलनेन चत्वारिंशद् भेदाः-

**तदेवं लक्षणाभेदाश्चत्वारिंशन्मता बुधैः।**[43]

ता अपि प्रत्येकं पदगतत्वेन वाक्यगतत्वेन च द्विधेति अशीतिप्रकारा लक्षणा प्रतिपादिताऽस्ति -

**एवमशीतिप्रकारा लक्षणा**[44]

आचार्येण विश्वनाथेन प्रतिपादिताः लक्षणाभेदाः अलङ्कारशास्त्रोपयोगिनो न सन्ति, अशीतिप्रकाराणां लक्षणाभेदानां काव्यशास्त्रेऽनुपयोगात्। यथोक्तम्-

एवम् प्रायः सर्वैरालङ्कारिकैः कृता भेदा उपयोगितां लक्ष्यीकृत्यैव, परं साहित्यदर्पणकृता भेदाः शुद्धपदार्थविश्लेषणात्मकरीत्या न तूपयोगितादृष्ट्या।[45]

अतएव यैर्लक्षणायाः षड्भेदत्वं प्रतिपादितं तत्तु काव्यशास्त्रोपयोगदृष्ट्यैव। काव्यशास्त्रे लक्षणायाः षड्भेदानामुपयोगो यथा- उपादानलक्षणाया अर्थान्तरसङ्क्रमितवाच्यध्वनौ, लक्षणलक्षणायाश्चात्यन्ततिरस्कृतवाच्यध्वनौ। गौणसारोपा रूपकालङ्कारस्य बीजम्, गौणसाध्यवसाना तु प्रथमातिशयोक्तेर्बीजमिति। एवमेव शुद्धसारोपा चतुर्थातिशयोक्तेः बीजम्, शुद्धसाध्यवसाना तु कार्यकारित्वसामर्थ्यातिशयव्यङ्ग्योपदर्शिकेति लक्षणायाः षड्विधत्वप्रतिपादनस्य मूलम्।[46]

एवञ्च साहित्यकौमुदीकारेणापि लक्षणायाः यत् षड्विधत्वं प्रतिपादितं तदपि काव्यशास्त्रोपयोगितयेति। अतएव-

**व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने।**
**तच्च गूढगूढं वा ....................................**।।[47]

इत्यादिदिशा लक्षणा अव्यङ्ग्या (रूढिलक्षणा) सव्यङ्ग्या (प्रयोजनवती) इति पूर्वं द्विविधा। सव्यङ्ग्या प्रयोजनवती तु षड्विधा पूर्वं प्रतिपादिता। तेषां सव्यङ्ग्यभेदानां व्यङ्ग्यस्य गूढतया अगूढतया चेति द्वौ भेदाविति सव्यङ्ग्यायाः द्वादशभेदाः, अव्यङ्ग्यया सङ्कलनेन त्रयोदशप्रकारा लक्षणा लक्षिताः, तथापि एतेषां दिग्दर्शनमात्रमुपस्थापितम्। तेषां काव्यशास्त्रानुपयोगात् विस्तृतं वर्णनं न कृतम्। पूर्वोक्तानां षड्भेदानां काव्यशास्त्रोपयोगितयैव सत्सु बहुभेदेषु-

**लक्षणा तेन षड्विधा**

इति दार्ढ्येनोक्तमस्ति।

## व्यङ्ग्यव्यञ्जकविवेचनम्

व्यञ्जनोपाधिकः शब्दो व्यञ्जकः इति व्यञ्जकशब्दस्वरूपम्। व्यञ्जनावृत्त्या व्यञ्जकशब्दप्रतिपाद्योऽर्थो व्यङ्ग्य इति सम्पन्ने व्यङ्ग्यव्यञ्जकस्वरूपे किं तावद् व्यञ्जनास्वरूपमिति यया व्यञ्जनया प्रतिपाद्योऽर्थः तदुपाधिकश्च शब्दो महाकंवित्वलाभायावश्यक इति। यथोक्तं ध्वनिकारेण-

**सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन।**
**यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः॥**[48]

यथा वा-

**शक्तिं भजन्ति सरलाः लक्षणां चतुरा नराः।**
**व्यञ्जनां नर्ममर्मज्ञाः कवयः कमना जनाः॥**[49]

## व्यञ्जनास्वरूपम्

साहित्यकौमुदीकारेण व्यञ्जनायाः किञ्चिन्निश्चितं पृथक् स्वरूपं न प्रतिपादितमस्ति, अपितु भेदप्रतिपादनमुखेनैवेति व्यञ्जना तावद् द्विविधा लक्षणामूला अभिधामूला च। अभिधामूलापि द्विविधा शाब्दी व्यञ्जना, आर्थी व्यञ्जना चेति। तत्र शाब्दीव्यञ्जनास्वरूपं यथा-

**अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।**
**संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥**[50]

अर्थात् अनेकार्थकशब्दश्रवणानन्तरं येषु येषु अर्थेषु तत्पदं शक्तमासीत् तेषां सर्वेषामर्थाना-मुपस्थितिर्जायते श्रोतुः। ततश्च एषु बहुविधेष्वर्थेषु कस्मिन्नर्थे वक्तुस्तात्पर्यमिति सन्देहो जायते। ततश्च सन्देहनिवृत्त्यर्थं तात्पर्यनिर्णायकं प्रकरणादिकं पर्यालोचयति। ते च तात्पर्यनिर्णायकाः-

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः।**
**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः॥**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥**

तात्पर्यनिर्णायकैः प्रकरणादिभिः वक्तुस्तात्पर्यनिर्णये सति तस्मिन्नेवार्थेऽभिधा नियन्त्रिता जायते। ततश्च अभिधया प्रतिपादितः सोऽर्थो वाच्यार्थः। तदतिरिक्तानामन्येषामर्थानां बोधस्तु यया जायते सा वृत्तिः व्यञ्जना नाम। शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः इति नियमादभिधायाः विरतत्वात्।

आर्थीं व्यञ्जनां प्रतिपादयता साहित्यकौमुदीकारेणोक्तं यत्- वक्तृ- बोद्धव्य- काकु- वाक्य- वाच्याऽन्यसन्निधिप्रस्ताव- देश- कालादिवैशिष्ट्याद्वाच्याद्यर्था-पेक्षयाऽन्येषा-मर्थानां प्रतीतिर्यया जायते सा व्यञ्जनेति-

**वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः।**
**प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ॥**
**यो ऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा।**[51]

काव्यप्रकाशकारेण मम्मटेनापीत्थमेव व्यञ्जनास्वरूपं प्रतिपादितमस्ति।

**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः।।**[52]

अपि च-

**योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा।**[53]

व्यञ्जनास्वरूपं तु साहित्यदर्पणकारेण श्रीविश्वनाथेनातीवस्सुस्पष्टतया प्रतिपादितमस्ति-

**विरतास्वभिधाद्यासु ययाऽर्थो बोध्यते परः।**
**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च।।**[54]

अर्थात् स्वं स्वमर्थं बोधयित्वा शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः इति नियमाद् विरतासु अभिधा-लक्षणा-तात्पर्याख्यासु वृत्तिषु यया अन्यः वाच्य-लक्ष्य-तात्पर्यभिन्नोऽर्थो बोध्यते सा शब्दस्य अर्थस्य च वृत्तिः व्यञ्जनेति।

एवञ्च वाच्याद्यर्थसामर्थ्याक्षिप्तोऽर्थो व्यङ्ग्यार्थः। व्यङ्ग्यार्थप्रतिपादिका च शक्तिः व्यञ्जनेति मम्मटभट्ट-पण्डितराजजगन्नाथयोर्मतभेदविमर्शे व्यञ्जनानिरूपणप्रस्तावे अस्मद्-गुरुचरणैः

**व्यङ्ग्यप्रकाशनानुकूलशब्दव्यापारो व्यञ्जना।**[55]

किञ्च-

**वाच्यलक्ष्यातिरिक्तार्थप्रतिपत्तिहेतुरर्थव्यापारो व्यञ्जना।**

तथा च-

**नियन्त्रितार्थविषयकज्ञानानुकूलशब्दव्यापारत्वम शाब्दव्यञ्जनात्वम्। वक्त्रादिवैशिष्ट्यहेतुका प्रतिभाशालिनामन्यार्थज्ञानहेतुभूतव्यापार-त्वमर्थव्यञ्जनात्वम्।**[56]

नागेशभट्टेन तु उद्योते- मुख्यार्थबाधादिग्रहनिरपेक्षबोधजनको मुख्यार्थसम्बद्धासम्बद्ध-साधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धसंस्कारविशेषो व्यञ्जना।[57]

इति व्यञ्जनास्वरूपं प्रतिपादितम्।

**व्यञ्जनायाः स्थापनम्**

अभिधालक्षणातात्पर्यास्तु वृत्तयः प्रायैः सर्वैरेव शास्त्रकारैः मीमांसकैः नैयायिकैः वैयाकरणैः वेदान्तिभिश्च स्वीकृताः प्रतिपादिताश्च सन्ति, व्यञ्जना न केनापि स्वीकृता। व्यञ्जना तु केवलमालङ्कारिकैरेव स्वीक्रियते। एवञ्च व्यञ्जनाविषये नैकविधा विप्रतिपत्तयो दृश्यन्ते। व्यञ्जनाविरोधिनः सन्ति अभिधावादिनः,. लक्षणावादिनः, तात्पर्यावादिनः, अनुमानवादिनश्च।

**अभिधावादिनः**

अभिधावादिनस्तु अभिधयैव व्यङ्ग्यस्यार्थस्यापि प्रतीतिमुपस्थापयन्ति। तेषां मतमस्ति-

**सो ऽयभिषोरिव दीर्घदीर्घतरोऽभिधा व्यापारः**[५८]

इति। अर्थात् यथा बलवता प्रेरित इषुः एकेनैव वेगाख्येन व्यापारेण वर्मच्छेदम्, उरोभेदम्, प्राणहरणं च रिपोर्विधत्ते तथैव एकेनैव अभिधाव्यापारेण पदार्थोपस्थितिम्, वाक्यार्थज्ञानम्, व्यङ्ग्यार्थप्रतीतिश्चेति सर्वमेव प्रतिपाद्यत इति अभिधयैव व्यङ्ग्यस्यार्थस्य प्रतीतेः। काऽऽवश्यकता व्यञ्जनायाः? इति।

ननु शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः इति नियमस्य जागरूकत्वेऽपि कथमभिधयैव पदार्थ-वाक्यार्थ-व्यङ्ग्यार्थज्ञानम्? पदार्थबोधानन्तरमेवाभिधाया विरतत्वात् इति चेन्न, विवक्षितार्थप्रतीतिं विना तस्याः विरामाऽभावात्।

**अभिधावादखण्डनम्**

येऽभिधया व्यङ्ग्यार्थप्रतीतिं प्रतिपाद्य अभिधायामेव व्यञ्जनायाः अन्तर्भावत्वं प्रतिपादयन्ति तन्न युक्तम्। यतो हि शब्दश्रुतेरनन्तरं यावानर्थो लभ्यते तावति सर्वत्र यदि अभिधैव व्यापारः स्यात्तदा ब्राह्मण! पुत्रस्ते जातः इति वाक्याज्जायमानायाः हर्षप्रतीतेः, तथा च ब्राह्मण! कन्या ते गर्भिणी जाता इति वाक्याज्जायमानायाः शोकप्रतीतेरपि वाच्यत्वमेव स्यात्। न चानयोः वाच्यत्वं भवति, अनयोर्वाक्यार्थयोः हर्षशोकयोः सङ्केताभावात्, सङ्केतितार्थस्यैवाभिधया बोधनात्। किञ्च यदि सर्वत्राभिधैव व्यापारः स्यात्तदा लक्षणीयस्याप्यर्थस्याभिधयैव प्रतीतिः स्यादिति लक्षणाया अव्युच्छेदापत्तिः स्यात्।

अपरञ्च- श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविकर्षात् इति जैमिनिसूत्रम्। अस्यार्थः- श्रुत्यपेक्षया लिङ्गं दुर्बलम्, तदपेक्षया वाक्यम्, तदपेक्षया प्रकरणम्, ततोऽपि स्थानम्, तदपेक्षयापि समाख्यायाः दुर्बलत्वम्, क्रमशो विलम्बेनार्थप्रतीतिः। अत्र यदि सर्वत्राभिधैव व्यापारस्तदा अभिधयाऽर्थप्रतीतिसत्वे इदमेतदपेक्षया दुर्बलमिति व्यवहारः कथं स्यात् सर्वेषामर्थानां समकालतयोपस्थितेरिति न सर्वत्राभिधैव व्यापारः।

किञ्च कुरु रुचिम् इत्यनेन वक्ता कञ्चिदन्यं प्रति रुचिं परामृशति किन्तु कृधातोः लोट्लकारे आज्ञार्थे मध्यमपुरुषैकवचने कुरु इति रूपम्, इच्छार्थकस्य रुचिपदस्य द्वितीयैकवचने रुचिम् इति अनयोः वैपरीत्ये रुचिङ्कुरु इत्यत्र चिङ्कुरु इति देशविशेषेऽसभ्यमर्थं प्रतिपादयति, यदि अभिधैवैको व्यापारस्तदा कथमेकत्र सभ्यार्थप्रतीतिः अपरत्र चासभ्यार्थस्य प्रतीतिरिति?

किञ्च केवलाया एवाभिधाया व्यापारत्वे समानार्थकयोरेव पदयोः एकस्य काव्यानुगुणत्वम्, अपरस्य च काव्याननुगुणत्वं न स्यात्। यथा-

**द्वयं गतं सम्प्रति शोचनीयतां**
**समागमप्रार्थनया कपालिनः।**

इत्यत्र शोचनीयताप्रसङ्गे कपालिनः इत्यस्य काव्यानुगुणत्वमस्ति, पिनाकिनः इत्यस्य न काव्यानुगुणत्वमिति। अभिधया तु कपालिनः पिनाकिन; इत्युभाभ्यामपि पदाभ्यां शङ्कररूपस्यैवार्थस्य प्रतीतेः एकस्यानुगुण्यम्, अपरस्य चाननुगुणत्वं न स्यादिति।

किञ्च कश्चिदेकस्य वाक्यस्य वाच्यार्थं जानाति, अपरस्तु सहृदयस्तेनैव वाक्येनार्थान्तरमपि प्रतीतिविषयीकरोति। क्वचिदर्थयोः स्वरूपभेदो दृश्यते। निश्चितैकार्थकेनापि वाक्येन क्वचिदेकेषामर्थानामनेकैरनुभवः क्रियते इत्यादि बहवो भेदाः दृश्यन्ते। इति सिद्धं वाच्यार्थोऽन्यः। अन्यश्च व्यङ्ग्यार्थः। यः ब्राह्मण पुत्रस्ते जातः कन्या ते गर्भिणी जाता इत्यादौ हर्षशोकतामनुगच्छति। यश्च श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानाम् जैमिनिसूत्रोक्तानां पूर्वपूर्वबलीयस्त्वं यद्वा पारदौर्बल्यम्प्रतिपादयति। यश्च कुरु रुचिम् इति वाक्यपदयोः वैपरीत्येऽसभ्यार्थस्य प्रतीतिं कारयति। एवञ्च द्वयं गतं सम्प्रति शोचनीयताम् इत्यादौ कपालिनः काव्यानुगुणत्वम् पिनाकिनः इत्यस्य तु काव्याननुगुणत्वं प्रतिपादयति। अथ च अर्थयोः बोद्ध्रोः, स्वरूपयोः, संख्यायाः, निमित्तयोः, कार्ययोः प्रतीतिकालयोः, आश्रययोः, विषययोश्च भेदमुपस्थापयति। यथोक्तम्-

**बोधृस्वरूपसंख्यानिमित्तकार्यप्रतीतिकालानाम्।**
**आश्रयविषयादीनां भेदाद्भिन्नोऽभिधेयतो व्यङ्ग्यः।।**[59]

अर्थात् वाच्यार्थस्य बोद्धा कोऽपि भवितुमर्हति, किन्तु व्यङ्ग्यस्तु सहृदयैरेव ज्ञायते- ज्ञायते स तु काव्यार्थतत्त्वज्ञैरेव केवलम्[60]। क्वचिद् वाच्यार्थस्य विधिरूपत्वे व्यङ्ग्यस्य निषेधरूपतो यथा- भ्रमधार्मिक विश्रब्धः इत्यादौ। क्वचिच्च वाच्यस्य निषेधरूपत्वे व्यङ्ग्यस्य विधिरूपता, क्वचित् वाच्यस्य विधिरूपत्वे व्यङ्ग्यस्यानुभयरूपता, क्वचिच्च वाच्यस्य निषेधरूपत्वे व्यङ्ग्यस्यानुभयरूपतेति वाच्यव्यङ्ग्ययोः स्वरूपभेदः। वाच्यस्तु एक एव भवति किन्तु गतोऽस्तमर्कः इत्यादौ बोधभेदादनेकार्थतेति संख्या। वाच्यार्थज्ञानस्य निमित्तमस्ति पदार्थज्ञानं तच्च व्याकरणकोशादिपरिज्ञानात्। व्यङ्ग्यार्थज्ञाने तु पदपदांशवाक्यप्रबन्ध-रचना-प्रकृतिप्रत्ययादयः कारणानि एतेषां सर्वेषामर्थव्यञ्जकत्वात्, इति निमित्तभेदः।

एवमेव बहवो भेदाः सन्ति वाच्यार्थव्यङ्ग्यार्थयोरिति सिद्धमेव अभिधाव्यञ्जनयोर्भेद इति नाभिधायां व्यञ्जनान्तर्भावः।

### लक्षणावादिनः

लक्षणावादिनस्तु व्यञ्जनावादिनां लक्षणामूलायाः व्यञ्जनायाः लक्षणायामेवान्तर्भावत्वं प्रतिपादयन्तो व्यञ्जनानिरासमुपस्थापयन्ति। तद्यथा-गङ्गायां घोषः इत्यादौ अभिधाया गङ्गाया प्रवाहरूपार्थस्योपस्थितिर्जायते ततश्च जलप्रवाहघोषयोः आधाराधेयभावसम्बन्ध-रूपान्वयानुपपत्तिरूपमुख्यार्थबाधे जाते सति गङ्गापदं तटं लक्षयति, शैत्यपावनत्वप्रतीतिश्च लक्षणायाः फलमिति जलप्रवाहरूपं वाच्यमर्थं प्रतिपाद्याभिधायाम् तटरूपमर्थं च प्रतिपाद्य लक्षणायां विरतायां शैत्यपावनत्वरूपफलस्य प्रतिपादनार्थं व्यञ्जनायाः अपेक्षा भवति, इति क्रमः सर्वजनसंवेद्योऽस्ति।

लक्षणावादिनस्तु कथयन्ति शैत्यपावनत्वरूपव्यङ्ग्यार्थस्यापि प्रतीतिर्लक्षणयैव भविष्यतीति नास्ति व्यञ्जनायाः आवश्यकता। तद्यथा-जलप्रवाहः वाच्योऽर्थः, शैत्यपावनत्वादि- विशिष्टं तटं लक्ष्योऽर्थः, अभिधाप्रतिपाद्यतटरूपार्थादधिकस्यार्थस्य प्रतीतिः प्रयोजनमिति, लक्षणयैव शैत्यपावनत्वादिसिद्धेः लक्षणायामेव व्यञ्जनाया अन्तर्भाव इति।

किञ्च अभिधान्तर्भावखण्डने यत् पूर्वं व्यङ्ग्यार्थस्य नानात्वं प्रतिपादितं तथैव लक्षणीयोऽर्थो नानात्वं भजते। यथा-

**रामोऽस्मि सर्वं सहे**
**रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्**
**रामो ऽसौ भुवनेष विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्।**

इति वाक्यत्रयेण रामपदस्यैव लक्षणीयोऽर्थो नानात्वं भजते। यथा प्रथमस्य रामपदस्य सर्वदुःखसहिष्णुरामः इति लक्ष्योऽर्थः। द्वितीयस्य रामपदस्य निष्करुणो रामः, तृतीयस्य च खरदूषणादिनिहन्ता रामः इति लक्षणीयोऽर्थः। अतो न लक्ष्यव्यङ्ग्ययोर्भेद इति लक्षणायामेव व्यञ्जनायाः अन्तर्भाव इति।

### लक्षणावादिनां खण्डनम्

यदुक्तं लक्षणयैव शैत्यपावनत्वरूपव्यङ्ग्यार्थज्ञानमिति तन्न युक्तम्। यतो हि शैत्यपावनत्वादिकं लक्ष्यं तदा स्याद् यदा लक्ष्यं तटं मुख्योऽर्थः स्यात्, तत्र च बाधः स्यादिति किन्तु गङ्गापदस्य तटं मुख्योऽर्थो नैव भवितुमर्हति गङ्गायास्तटे सङ्केताभावात्। यदि च स्यादपि तटं मुख्योऽर्थस्तदा तत्र बाधो न स्यात् तटे घोषाधिकरणत्वस्य सम्भवात्। तदेवोक्तम् -

**लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो।**
**न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः॥**

किञ्च शैत्यपावनत्वविशिष्टेऽपि तटे लक्षणा न स्यात् विषयफलयोर्भेदात्, तटं च लक्षणायाः विषयः फलं च शैत्यपावनत्वमित्यनयोर्भेदात्। यथोक्तं प्रकाशे ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्।[61]

यदुक्तं लक्षणीयोऽर्थो नानात्वं भजत इति न लक्षणातिरिक्ता व्यञ्जनेति तदपि न एववाक्यस्थरामपदेनैकस्यैव लक्षणीयस्यार्थस्य प्रतीतेः। व्यञ्जनया तु एकैनेव पदेन वाक्येन वा नानार्थप्रतीतिरिति। यथोक्तमस्मद्गुरुचरणैः-

**लक्ष्यार्थस्तत्र भिन्नोऽपि नानार्थशब्दवाच्य इव नियत एव, एकस्माद् वाक्यादेक एव लक्ष्यार्थः प्रतीयते।**[62]

एवञ्च सिद्धं लक्ष्यार्थव्यङ्ग्यार्थयोर्भेद इति नैव लक्षणायां व्यञ्जनाया अन्तर्भावः।

## तात्पर्यावादिनः

तात्पर्यावादिनो भाट्टमीमांसकाः दशरूपककारो धनिकश्च यत्परः शब्दः स शब्दार्थः तथा चै तात्पर्यं न तुलाधृतम्, इत्यादिभिः तात्पर्ययैव व्यङ्ग्यार्थज्ञानमपि प्रतिपादयन्तो व्यञ्जनानिरासं प्रतिपादयन्ति। अर्थाद् वक्ता यावद् तात्पयमभिप्रेत्य शब्दस्य प्रयोगं करोति तेन शब्देन यावतामर्थानां प्रतीतिर्जायते तावत्सर्वत्र तात्पर्यार्थतैव। किञ्च तात्पर्या नहि केवलमन्वयमेव सम्पादयति, अपितु अन्वयानन्तरं वक्तुरभिप्रेतसम्पादनं यावत्सर्वं करोतीति। नहि तात्पर्यार्थातिरिक्तं किञ्चिदस्ति, न च तत्प्रतिपादनार्थं व्यञ्जना स्वीकरणीयेति।

## तात्पर्याखण्डनम्

यत्परः शब्दः स शब्दार्थः इति वादिनो मीमांसकास्तात्पर्यमज्ञात्वैवैवं व्याख्यायन्ते। यतो हि अस्य मतस्य खण्डनं तु तेषां वचनेनैव जायते। एकत्र ते कथयन्ति यावदेव विधेयं तावदेव तात्पर्यम्। विधेयं तु अप्राप्तमात्रे यथा अग्निरदग्धमेवेन्धनं दहति न तु दग्धमपि तथैव वाक्ये तदेव विधीयते यत्पूर्वतः प्राप्तं न भवति यथा ऋत्विजः प्रचरन्ति इत्यत्र ऋत्विक्प्रचरणं विधेयम् ततश्च सोष्णीषा ऋत्विजः प्रचरन्ति इत्यत्र केवलमुष्णीषत्वमात्रं विधेयम्, पुनश्च, लोहितोष्णीषा ऋत्विजः प्रचरन्ति इत्यत्र लोहितत्वमात्रं विधीयते। एवमेव जुहोति इत्यनेन हवनस्य सिद्धेः पुनः दध्ना जुहोति इत्यत्र न हवनं विधीयते, अपि तु दधिकरणं विधीयते। एवञ्च सिद्धम् यावदेव पूर्वतोऽप्राप्तं तावदेव शब्देन विधीयते, यच्च विधेयं भवति तत्रैव तस्य शब्दस्य तात्पर्यं भवति न तु तात्पर्यं प्रतीतिमात्रे इति। एवं प्रतीतिमात्रस्य तात्पर्यत्वे शिथिले सति यत्परः शब्दः स शब्दार्थः इति सिद्धान्तोऽपि शिथिल एव। अतो न तात्पर्यया व्यङ्ग्यार्थगतार्थत्वम्, न च तात्पर्यायां व्यञ्जनाऽन्तर्भाव इति।

## अनुमानवादिनः

अनुमानवादिनस्तु महिमभट्टादयोऽनुमानेनैव व्यङ्ग्यार्थस्यापि प्रतीतेः, अनुमाने एव व्यञ्जनाया अन्तर्भावः नावश्यकता व्यञ्जनाया इति प्रतिपाद्य व्यञ्जनानिरासं प्रतिपादयन्ति। अनुमानेन व्यङ्ग्यार्थगतार्थता यथा- भ्रम धार्मिक! विश्रब्धः स श्वाऽद्य मारितस्तेन। गोदानदी- कच्छकुञ्जवासिना दृप्तसिंहेन।। इत्यत्र भ्रम इति विधिः वाच्यः, सिंहोपलब्धेश्च मा भ्रम इति व्यङ्ग्योऽर्थः। स च व्यङ्ग्योऽर्थः अनुमानसिद्धः। यथा- यद्यद् भीरुभ्रमणं तत्तद् भयकारणनिवृत्त्युपलब्धि-पूर्वकम् इति व्याप्तिः, पूर्वं वाटिकायां शुनः, सत्त्वादभ्रमणस्य दर्शनात्। एवञ्च व्याप्त्या गोदावरीतीरं भीरुभ्रमणाऽयोग्यं सिंहोपलब्धेः इत्यनुमानं जायते। एवञ्च व्यङ्ग्यार्थोऽनुमानवेद्य इति।

## अनुमानखण्डनम्

व्यञ्जनामङ्गीकुर्वन्तः आलङ्कारिकास्तु अनुमानेन व्यङ्ग्यार्थगतार्थतायाः खण्डनं कुर्वन्ति। ते कथयन्ति यत् - शुद्धेनैव हेतुना अनुमानं जायते न तु हेत्वाभासेन। पक्षसत्त्व-सपक्षसत्त्व-विपक्षव्यावृतत्त्वानि हेतोः शुद्धतानिरूपकानि। एतेषामेकस्याप्यभावे हेतुः हेत्वाभासो जायते। अनुमाने तु हेतुः कारणं न तु हेत्वाभास इति अत्राभ्रमणरूपानुमाने यो हेतुरस्ति सिंहोपलब्धेः इति भीरुरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेण वा भययुक्तेऽपि स्थाने भ्रमतीति हेतोरनैकान्तिकत्वम्। अपवित्रतया शुनो बिभ्यदपि कश्चिद् वीरः सिंहान्न बिभेति इति विरुद्धो हेतुः। किञ्चात्र हेतुरसिद्धोप्यस्ति। यतो हि गोदावरीतीरे सिंहोऽस्तीत्यत्र किं प्रमाणम्? केवलं नायिकावचनमेव प्रमाणमस्ति। नायिका तु पुंश्चल्यस्तीति तस्याः वचनं न प्रमाणमिति गोदावरीतीरे सिंहोपलब्धौ प्रमाणाभावात् सिहोपलब्धिरूपो हेतुः असिद्धः। एवमनैकान्तिकतया, विरुद्धत्वात् असिद्धत्वाच्चात्र हेतोराभासत्वमिति नैवाभ्रमण-स्यानुमानसिद्धिः, तदर्थं व्यञ्जनायाः आवश्यकत्वमस्तीति।

किञ्च -

**अर्थान्तराभिव्यक्तौ या सामग्री सन्निबन्धनम्।**
**सैवानुमितिपक्षे नो गमकत्वेन सम्मता।।**

इति यदुक्तं तदपि न, अनुमानसामग्र्या व्यञ्जनासामग्र्याश्च भेदात्। यथा-यदि निःशेषच्युतचन्दनम् इत्यादौ गतासि इत्यनेन व्यक्तस्य न गतासि इति व्यङ्ग्यार्थस्यानुमाने सामग्रीत्वेनास्ति हेतुः। स यथा- त्वं वापीं स्नातुं न गतासि, इत्यनुमाने स्तनतटयोरेव निःशेषच्युतचन्दनत्वात् इति हेतुः स च कारणान्तरेणापि स्नानत्वादिना सम्भवात् अनैकान्तिकः। व्यञ्जनायां तु निःशेषच्युतचन्दनस्तनतटत्वं न सामग्री, अपि तु नायिकया प्रयुक्तं नायकस्य कृते अधमपदस्य प्रयोग इति व्यञ्जनाऽनुमानयोः सामग्रीभेदः सुस्पष्ट एव।

यदि चानुमानवादी एवं कथयेत् यन्मयापि अधमपदेनैवानुमानं कर्तव्यम्। तद्यथा यत्र यत्र नायिकया नायकार्थमधमपदस्य प्रयोगस्तत्र तत्र नायकस्य दूतीसम्बन्धत्वमिति व्याप्त्या दूतीसम्भोगः नायकस्य अनुमीयते नायिकया अधमपदस्य प्रयोगात् इति चेत्तदपि न, पद-पदांश- वाक्य-रचना-प्रबन्धादीनामनेकविधानां व्यञ्जनासामग्रीत्वेन प्रतिपादनात्- इति उद्योते सुस्पष्टम्।

एवञ्च नानुमाने, नाभिधायाम् , न तात्पर्यायाम्, न लक्षणायां व्यञ्जनायाःअन्तर्भावो भवितुर्महतीति व्यङ्ग्यार्थबोधनाय सत्यां व्यञ्जनाया आवश्यकतायामालङ्कारिकैः व्यञ्जनाऽङ्गीक्रियते।।

## सन्दर्भ-सूचिः

1. साहित्यकौमुदी- 2।2.
2. साहित्यकौमुदी- 2।3.
3. काव्यप्रकाशः - 2/8
4. साहित्यदर्पणः- 2।4.
5. साहितयरत्नाकरः- 2।2.
6. साहि0कौमुदी- 2।3.
7. शक्तिमीमांसा- पृ0 36.
8. सा0द0- 2.
9. साहित्यकौमुदी- 2/3
10. साहित्यकौमुदी- परि0-2.
11. साहित्यकौमुदी- 2 परि0.
12. साहित्यकौमुदी- परि0 2.
13. साहित्यकौमुदी- 2।1.
14. साहित्यकौमुदी - परि0-2, का0 2.
15. काव्यप्रकाशः - 2।6.
16. साहित्यदर्पणः - 2।20.
17. दशरूपकम्- 4।37.
18. साहित्यदर्पणः- परि0 2, पृ0 241.
19. तत्रैव.
20. साहित्यदर्पणः- परि0 2, पृ0 241.
21. काव्यप्रकाशः- उ0- 5, पृ0 225.
22. साहित्यकौमुदी- 2।4.

23. साहित्यकौमुदी- 2।4.
24. काव्यप्रकाशः- 2।9.
25. प्रसन्नराघवम्.
26. रसगङ्गाधरः .
27. श्रीमम्मटभट्टपण्डित-राजजगन्नाथयोर्मतभेदविमर्शः, पृ0 101.
28. साहित्यकौमुदी परि0- 2.
29. काव्यप्रकाशः 2।9.
30. पृ0- 29, परि0 2.
31. दशरूपकम् - 4/37.
32. काव्यप्रकाशः- पृ0 30-5.
33. साहित्यकौमुदी-2.
काव्यप्रकाश0-2.
34. द्रष्टव्यं काव्यप्रकाशः - 2.
35. द्र0सा0र0ल0 3.
36. तत्रैव.
37. साहित्यदर्पणः - 2/9-10.
38. काव्यप्रकाशः- 2।12.
39. साहित्यकौमुदी - 2/7.
40. सम्भाविनो लक्षणाभेदाः काव्ये तदुपयोगश्च, पृ0.
41. साहित्यकोमुदी- 2.
42. अिमिधावृत्तमातृका.
43. सा0 द0 2।11.
44. साहित्यदर्पणः, 2।12.
45. सम्भविनो लक्षणाभेदाः काव्ये तदुपयोगश्च, पृ0 223.
46. द्रष्टव्यं, तत्रैव.
47 साहित्यकौमुदी-2.
48. ध्वन्यालोकः- 1।18.
49. त्रवेणिका- पृ0 37.
50. साहित्यकौमुदी- 2।14.
51. साहित्यकौमुदी- 3।1-2.
52. का0प्र0-2.
53. काव्यप्रकाशः- 3।1-2.

54. साहित्यदर्पणः- 5।1.
55. पृ0 126.
56. श्रीमम्मटभट्टपण्डितराजजगन्नाथयोर्मतभेदविमर्शः, पृ0 127.
57. उद्योते- पृ0.
58. भट्टलोल्लटः.
59. साहित्यदर्पणः-5.
60. ध्वन्या0.
61. काव्यप्रकाशः- 2.
62. मम्मटभट्टपण्डितराजजगन्नाथयोर्ममतभेदविमर्शः पृ. 143.



## तृतीयोऽध्यायः

# काव्यभेदाः ध्वनिविवेचनम् गुणीभूतव्यङ्ग्य-विवेचनम् अवरकाव्यविवेचनम्

### काव्यभेदाः

काव्यालोचनपरैः नीरक्षीरविवेके हंसायमानैः भावयित्रीभावनाभावितहृदयैः काव्यशास्त्रिभिः स्वस्वतार्किकबुद्धिवैभवेन, प्रत्यक्षाप्रत्यक्षं सर्वं हस्तामलकवत् कुर्वद्भिः कारयित्रीप्रतिभासमन्वितैः काव्यनिर्मातृभिर्महाकविभिः कृताः नानाविधाः काव्यविधाः दर्शं दर्शं काव्यभेदाः प्रतिपादिताः सन्ति। काव्यभेदप्रतिपादने काव्यशास्त्रिभिः अनेकदृष्ट्या विचारः कृतोऽस्ति। यथा- इन्द्रियग्राहितादृष्ट्या, रचनादृष्ट्या, बन्धदृष्ट्या, अर्थरमणीयतादृष्ट्या चेति। अत एवेन्द्रियरचनाबन्धार्थरमणीयतादयः सन्ति काव्यभेदनियामकाः इति संक्षेपेणैकैकशो विचारः प्रस्तूयते-

### इन्द्रियग्राहितादृष्ट्या

शब्दार्थौ काव्यम् इति काव्यस्वरूपे शब्दस्यार्थस्य च काव्यत्वाङ्गीकारात् शब्दस्य श्रवणेन्द्रियग्राह्यत्वात् अर्थस्य तु चक्षुरिन्द्रियग्राह्यत्वात् काव्यमपि द्विधेति स्वभावसिद्धम्। चक्षुरिन्द्रियग्राह्यं काव्यं द्रष्टुं योग्यम् इति व्युत्पत्त्या दृश्यमित्युच्यते, तथा श्रवणेन्द्रियग्राह्यं श्रोतुं योग्यम् इति व्युत्पत्त्या श्रव्यकाव्यमित्युच्यते। यथोक्तम्-

**दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम्।**
**दृश्यं तत्राभिनेयं तद्रूपारोपात्तु रूपकम्॥**[1]

### दृश्यकाव्यम्

दृश्यं काव्यं तदस्ति यच्चक्षुरिन्द्रियग्राह्यं भवति। अस्य नेदं तात्पर्यं यद् दृश्यकाव्ये श्रवणेन्द्रियस्योपयोगितैव न भवति, कथोपकथनस्य श्रवणाय श्रवणेन्द्रियस्य साहाय्यं भवत्येव। यतो हि कथोपकथनश्रवणेन विना नाटकस्य पूर्णरसास्वादनं नैव कर्तुं शक्यते। बधिरस्य नाटकदर्शने श्रवणेन्द्रियं विना पूर्णरसास्वादाभावात्। एवं श्रवणेन्द्रियस्य साहाय्येऽपि चक्षुरिन्द्रियस्यैव प्राधान्यात् तत् काव्यं दृश्यमित्युच्यते, संवादग्रहणाय श्रवणेन्द्रियस्य साहाय्येऽपि आङ्गिक- वाचिकाहार्य- सात्त्विकेतिचतुर्विधावस्थानुकरणरूपाऽभिनये चक्षुरिन्द्रियस्यैव प्राधान्यमास्ते। दृश्यकाव्ये नायकादिचरितस्य नटादौ आरोपो भवति। अत एवेदं रूपकमप्युच्यते-

**यथा मुखादौ पद्मादेरारोपो रूपकं मतम्।**
**तथैव नायकारोपो नटे रूपकमुच्यते ।।**[2]

दृश्यमपि काव्यं प्रथमं द्विधा विभक्तम्- रूपकम्, उपरूपकमिति। रूपकस्य दशभेदाः परिगणिताः सन्ति- 1- नाटकम् 2- प्रकरणम् 3- भाणः 4- व्यायोगः 5- समवकारः 6- डिम; 7- ईहामृगः 8- अङ्कः 9- बीथी 10 प्रहसनम् चेति-

**नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः।**
**ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश।।**[3]

दशरूपककारेण तु रूपकभेदानामेवकारेण दशभेदत्वं प्रतिपाद्य तस्य भेदान्तरस्य खण्डनमेव कृतमस्ति-

**दशधैव रसाश्रयात्**

उपरूपकस्याष्टादश भेदाः सन्ति प्रतिपादिताः - नाटिका, त्रोटकम् , गोष्ठी, सट्टकम्, नाट्यरासकम्, प्रस्थानम्, उल्लाप्यम्, काव्यम्, प्रेङ्खणम्, रासकम्, संलापकम्, श्रीगदितम्, शिल्पकम्, विलासिका, दुर्भल्लिका, प्रकरणी, हल्लीशः, भाणिका चेति-

**नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम्।**
**प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा।**
**संलापकं श्रीगदितं शिल्पकं च विलासिका।**
**दुर्भल्लिका प्रकरणी हल्लीशो भाणिकेति च।।**
**अष्टादश प्राहुरुपरूपकाणि मनीषिणः।**
**विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्।।**[4]

दशरूपककारेण दृश्यकाव्यं दशरूपकेष्वेव विभक्तमस्ति, उपरूपकाणां गणना तेन नैव कृता। नाट्यशास्त्रेऽपि उपरूपकभेदाः नैव कृताः सन्ति। हेमचन्द्रानुसारं दृश्यकाव्यस्य पाठ्यं गेयं चेति द्वौ भेदौ स्तः। पाठ्ये- नाटकम्, प्रकरणम्, नाटिका, समवकारः, ईहामृगः, डिमः, व्यायोगः, उत्सृष्टिका, अङ्कः, प्रहसनम्, भाणः, वीथी, सट्टकं चेति त्रयोदशभेदाः सन्ति प्रतिपादिता -

**पाठ्यं नाटक- प्रकरण-नाटिका- समवकारेहामृग-डिम-व्यायोगोत्सृष्टिकाऽङ्क-प्रहसन-भाण-वीथी-सट्टकादिः।**[5]

गेये- डोम्बिका, भाणः, प्रस्थानम्, शिङ्गकम्, भाणिका, प्रेरणम्, रामाक्रीडम्, हल्लीसकम्, रासकम्, गोष्ठी, श्रीगदितम्, रागः, काव्यञ्चेति त्रयोदशभेदाः गणिताः सन्ति-

**गेयं डोम्बिका- भाण- प्रस्थान- शिङ्गक- भाणिका- प्रेरण-रामाक्रीड-हल्लीसक- रासक- गोष्ठी- श्रीगदित- राग- काव्यादिः।**[6]

## श्रव्यकाव्यम्

श्रवणेन्द्रियग्राह्यं काव्यं श्रव्यकाव्यमिति कथ्यते। यद्यपि श्रव्यकाव्येऽपि पठितुं चक्षुरिन्द्रियस्यावश्यकता भवति तथापि तत्राभिनयाभावात् श्रवणेनापि तस्य रसास्वादाच्च तत् काव्यं श्रव्यमिति-

**श्रव्यं तत्काव्यमाहुः यन्नेक्ष्यते नाभिनीयते।**[7]

## रचनादृष्ट्या

रचनादृष्ट्या काव्यं त्रिधा भवति- गद्यम्, पद्यम्, चम्पूश्चेति। छन्दोरहितं काव्यं गद्यमित्युच्यते। तदपि कथा आख्यायिकेति द्विविधम् । छन्दोबद्धं काव्यं पद्यकाव्यमिति। तद्भेदाः बन्धभेदे प्रदर्शयिश्यन्ते। गद्यपद्योभयमयं काव्यं चम्पूरित्युच्यते-

**गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते।**[8]

## बन्धदृष्ट्या

बन्धो रचना, तद्दृष्ट्या काव्यभेदप्रतिपादने भेदत्रयं दृश्यते- मुक्तकम्, खण्डकाव्यम्, महाकाव्यञ्चेति। मुक्तकम् काव्यं तद् भवति यत्र किञ्चित् कथानकं न स्यात्। एवमेव काव्यभावनापूरितहृदयस्य कवेः भावाः स्वररागादिसमन्विताः एकश्लोकात्मकेन, द्विश्लोकात्मकेन- त्रिश्लोकात्मकेन-चतुःश्लोकात्मकेन, पञ्चश्लोकात्मकेन, एवंविधेन चान्येन रूपेण प्रस्फुटिताः जायन्ते। ये खलु श्लोकः, युग्मकम् सन्दानितकम्, कलापकम्, कुलकम्, अष्टकम्, अर्धशतकम्, शतकञ्चेत्यादि कथ्यन्ते। द्विश्लोकात्मकं युग्मकम्, त्रिश्लोकात्मकं संदानितकम्, चतुःश्लोकात्मकं कलापकम्, पञ्चश्लोकात्मकं तु कुलकमिति स्वीकृतमस्ति-

**द्वाभ्यां तु युग्मकं सन्दानितकं त्रिभिरिष्यते।**
**कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम्॥**[9]

अष्टके च तदनुसारमेव श्लोकसंख्या निर्धारिताऽस्ति। अर्धशतके शतककाव्ये च किञ्चिन्न्यूनाधिक्यमपि भवति। अर्धशतक- शतककाव्येषु च कथानकसमावेशोऽपि दरीदृश्यते।

खण्डकाव्ये तु इतिहासप्रसिद्धं किञ्चित्कथानकं भवति किन्तु तत्र नायकस्य सम्पूर्णं जीववृत्तान्तं नैव गुम्फितं भवति, अपि तु तज्जीवनस्यैकदेशस्य घटनाविशेषस्य वा गुम्फनं भवति-

**खण्डकाव्यं भवेत्काव्यस्यैकदेशानुसारि च॥**[10]

महाकाव्यं तु आचार्येण विश्वनाथेनैवं लक्षितम्-

**सर्गबद्धो महाकाव्यं तत्रैको नायकः सुरः॥**

सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः।
एकवंशभवा भूपाः कुलजा बहवोऽपि वा॥
श्रृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते।
अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः॥
इतिहासोद्भवं वृत्तमन्यद् वा सज्जनाश्रयम्।
चत्वारस्तस्य वर्गाः स्युस्तेष्वेकं च फलं भवेत्॥
आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा।
क्वचिन्निन्दाखलादीनां सतां च गुणकीर्तनम्॥
एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः।
नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह॥
नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते।
सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत्॥
सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः ।
प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः ॥
संभोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः।
रणप्रयाणोपयममन्त्रपूत्रोदयादयः ॥
वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह।
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा॥
नामास्य सर्गोपादेयकथया सर्गनाम तु॥

**अर्थरमणीयतादृष्ट्या**

अर्थोऽस्त्येकं काव्यशरीरघटकं तत्त्वम्। यदि काव्येऽशुभार्थप्रतिपादकशब्दानां प्रयोगः स्यात्तदा काव्यं स्वकीयपुरुषार्थचतुष्टयसम्पादनरूपप्रयोजनाच्च्युतमवश्यं स्यात्, किञ्च रामादिवद्वर्तितव्यं न रावणादिवत् इति कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशेऽपि समर्थं न स्यादिति रमणीयार्थप्रतिपादका एव शब्दाः काव्यपदेन व्यपदिष्टा भवन्ति्। पूर्वं प्रतिपादितानि दृश्यकाव्यानि श्रव्यकाव्यानि तथाऽन्यानि च यानि कान्यपि काव्यानि सन्ति तानि सर्वाण्यपि अर्थरमणीयतादृष्ट्या काव्यशास्त्रिभिः विभक्तानि सन्ति। एवमर्थरमणीयता सर्वत्रैव सामान्यमिति-

**अर्थरमणीयतैव आस्वादमूलकतेत्युच्यते।**[12]

अर्थरमणीयता कविशक्तिं प्रतिभां वाऽऽश्रयति। प्रत्येकं कविकाव्ये नहि भवति समानात्मिकाऽर्थरमणीयता। एवमर्थरमणीयताऽपि काव्यभेदनियामिकास्त्येव। अतएवार्थ-रमणीयतांदृष्ट्या प्रायः काव्यशास्त्रिभिः काव्यभेदाः प्रतिपादिताः सन्ति।

वाच्य-लक्ष्य-व्यङ्ग्येत्यर्थत्रैविध्येऽपि व्यङ्ग्यार्थ एव काव्यसर्वस्वमस्ति। व्यङ्ग्यार्थस्यैव वस्तुतः काव्यत्वात् व्यङ्ग्यार्थ एव यद्वा व्यङ्ग्यार्थरमणीयतैव मूलाधारोऽस्ति काव्यानां वर्गीकरणे, व्यङ्ग्यार्थस्यैव सहृदयजनग्राह्यत्वात्। व्यङ्ग्यार्थस्य त्रिविधा गतिर्भवति-

1 - स्फुट- प्रधान-व्यङ्ग्यार्थः।

2 - स्फुटाऽप्रधान- व्यङ्ग्यार्थः।

3 - अस्फुटो व्यङ्ग्यार्थः।

एतत्त्रयमेवाधारं मत्वा उत्तमम्, मध्यमम्, अवरञ्चेति भेदत्रयं प्रतिपादितमस्ति काव्यानाम्।

## उत्तमकाव्यम्

यत्र वाच्यार्थापेक्षया व्यङ्ग्यार्थस्य प्राधान्यं भवति तदुत्तमं काव्यम्। इदमेव ध्वनिकाव्यमपि कथ्यते-

**इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः।**[13]

## मध्यमकाव्यम्

यत्र वाच्यार्थे एवाधिकचमत्कारो भवति, व्यङ्ग्यार्थे तु वाच्यार्थापेक्षया न्यून एव भवति चमत्कारः तन्मध्यमं काव्यं भवति। इदमेव काव्यं गुणीभूतव्यङ्ग्यमित्युच्यते-

**अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्॥**[14]

## अवरकाव्यम्

यत्र व्यङ्ग्योऽर्थः स्फुटो न भवति तथा च शब्दालङ्कारे वा आर्थालङ्कारे वा कविसंरम्भगोचरता भवति तत्र व्यङ्ग्यार्थस्य अस्फुटत्वात् अप्राधान्याच्च अवरं नाम तृतीयं काव्यमिति-

**शब्दविचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्।**[15]

अर्थरमणीयतादृष्ट्या प्रतिपादिता एव काव्यभेदाः साहित्यकौमुदीकारेणाभिमताः सन्ति, साहित्यकौमुद्यामन्येषां भेदानां प्रतिपादनाभावात्। एवं काव्यप्रकाशकारेण साहित्यकौमुदीकारेण वा प्रतिपादितानां काव्यभेदानां समीक्षया प्रतीयते यत्- काव्यभेदकता व्यङ्ग्यार्थस्य स्फुटास्फुटत्वयोः प्राधान्याप्राधान्ययोः वा भवति । एवं स्फुटव्यङ्ग्यम्, अस्फुटव्यङ्ग्यञ्चेति पूर्वं भेदद्वयम्। व्यङ्ग्यार्थस्य स्फुटत्वेऽपि प्रधानव्यङ्ग्यम्, अप्रधानव्यङ्ग्यञ्चेति भेदद्वयम्। एतेषु स्फुटप्रधानव्यङ्ग्यं नामोत्तमं काव्यमिति। स्फुटाऽप्रधानव्यङ्ग्यं तु गुणीभूतव्यङ्ग्यं नाम मध्यमं काव्यमिति। एवं स्फुटव्यङ्ग्यस्य प्राधान्याप्राधान्याभ्यां भेदद्वयं कृतं तद्वदेव अस्फुटव्यङ्ग्यस्यापि प्राधान्याप्राधान्याभ्यां भेदद्वयस्यौचित्यं सिद्धमेव। अतः काव्यभेदत्रित्वं नोचितं भेदद्वयस्यौचित्यं सिद्धमेव

अतः काव्यभेदत्रित्वं नोचितमिति पण्डितराजजगन्नाथेन भेदचतुष्टयं प्रतिपादितम्- 1- उत्तमोत्तमम्, 2- उत्तमम्, 3- मध्यमम् 4- अधमञ्चेति।[16]

रसवादिना आचार्येण विश्वनाथेन ध्वनिवादिना आनन्दवर्धनाचार्येण च व्यङ्ग्यस्य प्रधानभावेन गुणभावेन च वर्तमानत्वात् भेदद्वयमेवाङ्गीकृतम्। तृतीयस्य चित्रकाव्यस्य तु चित्रत्वमेवाङ्गीकृतं न तु काव्यत्वमिति-

**प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते।**
**काव्यमुभे ततोऽन्यद् यत्तच्चित्रमभिधीयते।।**[17]

साहित्यदर्पणकारेणापीदमेव समर्थयतोक्तम् - केचिच्चित्राख्यं तृतीयं काव्यभेदमिच्छन्ति ----- इति। तन्न।[18]

किन्तु काव्यप्रकाशे साहित्यकौमुद्यां प्रतिपादिताः काव्यभेदाः सामाजिकाः सन्ति यतो हि समाजे प्रत्येकस्मिन्नपि वस्तुनि उत्तमता, मध्यमता, अधमता चेति त्रित्वं स्वभावसिद्धं दृश्यते। अतएव काव्यभेदस्यापि त्रित्वमुचितमेवास्ति।

**ध्वनिविवेचनम्**

काव्यशास्त्रिभिः ध्वनेः बहु महत्त्वं प्रतिपादितमस्ति। काव्यात्मविषये प्रचलितेषु सम्प्रदायेषु ध्वनिसम्प्रदायोऽप्यन्यतमोऽस्ति। अस्य सम्प्रदायस्योदयस्तदा जातः यदा भारतीयकाव्यशास्त्राकाशे आनन्दवर्धनाचार्यस्योदयो जात इति। काव्यस्यात्मा ध्वनिः इति सिद्धान्तयता तेन ध्वनिसम्प्रदायस्य सम्यक् स्थापना कृता। ध्वनिसिद्धान्तस्थापने आनन्दवर्धनाचार्येण अनेकेषां विरोधिनामाक्षेपानां साम्मुख्यं कृतम्। तदाक्षेपानां खण्डनं च कृत्वा तेन ध्वनिसिद्धान्तस्य स्थापनं कृतम्। समादृतश्च स सम्प्रदायः पश्चाज्जातैः काव्यं सदसद्विचारयितुं समर्थैः काव्यरसरसिकैः काव्यज्ञैः सहृदयैः।

यद्यपि ध्वनिपदमनेकेष्वर्थेषु व्यवहृतं ध्वनिकारेण। तद्यथा-

1- ध्वन्यते अस्मिन्निति ध्वनिः काव्यम्।

2- ध्वन्यते असाविति ध्वनिः व्यङ्ग्योऽर्थः।

3- ध्वननं ध्वनिः व्यञ्जनाव्यापारः।

4- ध्वनतीति ध्वनिः- व्यञ्जकः शब्दः।

5- ध्वन्यते आभ्यामिति ध्वनिः वाचक-शब्दः, वाच्योऽर्थश्चेति। तथापि सामान्यतया ध्वनिपदेन व्यङ्ग्यार्थस्य व्यञ्जनाव्यापारस्य वा प्रतीतिर्जायते। व्यञ्जनावादिना आचार्येण वाग्देवतावतारेण श्रीमम्मटभट्टेन काव्यप्रकाशे, श्रीविद्याभूषणेन साहित्यकौमुद्याञ्च प्रथमतः-

**इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः।**[19]

ध्वनेः प्रयोगः काव्यार्थे कृतः। पश्चाच्च ध्वनिकाव्यभेदनिरूपणावसरे व्यङ्ग्यार्थमुखेन तद्भेदः प्रयोगश्च सम्पादित इति पूर्वं संक्षेपेण साहित्यकौमुदीदिशा ध्वनिभेदाः प्रदर्श्यन्ते-

**ध्वनिभेदाः**

ध्वनिस्तावद् द्विविधः- लक्षणामूलः, अभिधामूलश्चेति। लक्षणामूलो ध्वनिः अविवक्षितवाच्य इत्युच्यते-

**अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद् ध्वनौ।**[20]

अर्थाद् यत्र वाच्योऽर्थो विवक्षितो न भवति, अपितु किमप्यर्थविशेषं प्रतिपादयितुं वक्ता यत्र वाचकं शब्दं विहाय लाक्षणिकमाश्रयति, तेन च लक्ष्यार्थमुपस्थाप्य तत्र व्यङ्ग्यार्थविशेषस्य प्रतिपादनं करोति। यथा- गङ्गायां घोषः। नह्यत्र वक्ता तटं प्रतिपादयितुं लाक्षणिकं पदं प्रयुनक्ति, अपितु शैत्यपावनत्वरूपव्यङ्ग्यार्थं प्रतिपादयितुमेव। व्यञ्जनायाः लक्षणामूलत्वं तु-

**व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने।**[21]

तथा च- तच्च गूढमगूढं वा। तद्भूर्लाक्षणिकः तत्र व्यापारो व्यञ्जनात्मकः यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते। फले शब्दैकगम्येऽत्र व्यञ्जना नापरा क्रिया।।

लक्षणामूलध्वनिरपि अर्थान्तरसङ्क्रमितवाच्यध्वनिः, अत्यन्ततिरस्कृतवाच्यध्वनिश्चेति। यत्र वाच्योऽर्थः वाक्यार्थेऽन्वयमलभमानो बाधितमुख्यार्थः सन् अर्थान्तरमाश्रयति स अर्थान्तरसङ्क्रमितवाच्यध्वनिः। यत्र तु वाच्यार्थः प्रकृतेऽनुपयुज्यमानः स्वार्थं विहाय सर्वथा अर्थान्तरमेवोपस्थापयति स अत्यन्ततिरस्कृतवाच्यध्वनिः। क्रमेणोदाहरणं यथा-

**ब्रुवे त्वामहमत्रास्ति संहतिर्विदुषामतः।**
**कीर्तयन्हरिमात्मीयां धियं धृत्वा स्थितिं कुरु।।**

अत्र त्वामिति पदम् उपदेश्यं त्वामिति अर्थान्तरे सङ्क्रमितम्। द्वितीयं यथा-

**मा प्रेक्षिष्ठास्तव यदि सखे बन्धुसङ्गेऽस्ति रङ्गः।**

अत्र बन्धुसङ्गे रङ्गश्चेत् मा प्रेक्षिष्ठाः इति वाच्योऽर्थः तं विहाय तामेव प्रेक्षस्व इति वैपरीत्यभाक्। यथा- उपकृतं बहु तत्र किमुच्यते इत्यादौ उपकृतमिति वाच्यार्थः अनुपकृतमित्यर्थमुपस्थाप्यात्यन्तं तिरस्कृतो जायते।

अमिधामूलस्तु ध्वनिः विवक्षितान्यपरवाच्यध्वनिरित्युच्यते। अर्थाद् यत्र विवक्षितोऽपि वाच्यार्थो व्यङ्ग्यनिष्ठो भवति स विवक्षितान्यपरवाच्यध्वनिरिति-

**विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः।**[23]

अस्य सुस्पष्टताऽ नेन शाखावृक्षेण भविष्यति-




अभिधामूलो विवक्षितान्यपरवाच्यध्वनिस्तु प्रथमं द्विविधः - अलक्ष्यक्रमव्यङ्ग्यः, लक्ष्यक्रमव्यङ्ग्यश्चेति।




अलक्ष्यक्रमव्यङ्ग्यस्तु रसादिरूपः एक एव गण्यते। यद्यपि रसादिरित्यत्रादिपदेन भाव-रसाभास-भावाभास-भावोदय-भावशान्ति- भावसन्धि- भावशबलता इत्यष्टानां ग्रहणम्। रसोऽपि शृङ्गारादिभेदेनानेकविधः। शृङ्गारोऽपि संयोगवियोगाभ्यां द्विविधः। तत्रैकः संयोगशृङ्गार एवानन्तनायकनायिकानिष्ठत्वात् देशकालादिभेदादसंख्यः एवञ्च तद्गणनायाः अशक्यत्वात् अलक्ष्यक्रमः एक एवेत्युच्यते।

लक्ष्यक्रमव्यङ्ग्यस्तु सोऽस्ति यत्र व्यङ्ग्यार्थप्रतीतौ क्रमस्य प्रतीतिर्जायते। सोऽयं संलक्ष्यकमः प्रथमं त्रिविधः- शब्दशक्त्युत्थः, अर्थशक्त्युत्थः, उभयशवत्युत्थश्चेति।

शब्दशक्त्युद्भवो द्विविधः - वस्तुध्वनिः, अलङ्कारध्वनिश्चेति-




अर्थशक्त्युत्थोऽपि पूर्वं त्रिविध :- स्वतः संभवी, कविप्रौढोक्तिसिद्धः, कविनिबद्धवक्तृ-प्रौढोक्तिसिद्धश्चेति। त्रिविधोऽप्ययं वस्त्वलङ्कारभेदाभ्यां षड्विधः। षड्विधैश्च तैः क्वचिद्वस्तु व्यज्यते, क्वचिच्चालङ्कार इति द्वादशभेदाः। अर्थशक्त्युद्भवस्य उभयशक्त्युत्थस्तु एक एव।






तदेवं सङ्कलनेन, लक्षणामूलायाः द्वौ भेदौ, अभिधामूलायामलक्ष्यक्रमस्यैको भेदः, संलक्ष्यक्रमभेदेषु शब्दशक्त्युद्भवस्य द्वौ भेदौ, अर्थशक्त्युद्भवस्य द्वादश भेदाः उभयशक्त्युत्थस्तु एक ऐवेति 2+1+2+12+1=18 ध्वनेरष्टादशभेदाः।

यथोक्तम्- **भेदा अष्टादशास्य तत्**[24]

एतेषु उभयशक्त्युथं विहायान्ये सप्तदशभेदा पदवाक्यगतत्वेन द्विविधा इति 34 चतुस्त्रिंशद् भेदाः। उभयशत्त्युत्थमादाय पञ्चत्रिशंद् (35) भेदा इति। अर्थशत्त्युद्भवानां द्वादशभेदानां प्रबन्धगतत्वाच्च 35+12=47 सप्तचत्वारिंशद् भेदाः। रसादीनां पद-तदेकदेश- रचनावर्णगतत्वाच्च चत्वारोऽन्येऽपि भेदा इदि 47+4=51एकपञ्चाशद् ध्वनिभेदाः सङ्कलिताः सन्ति। एते एकपञ्चाशत् शुद्धाः ध्वनिभेदाः। एतेषां परस्पर-योजनात् संकरेण संसृष्ट्या च 10455 भेदाः जायन्ते। यथोक्तम्-

**........................ तेषां चान्योन्ययोजनम्।**

**संङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया॥**

तेषामेकपञ्चाशतः प्रत्येकमेकमञ्चाशता गुणनं चेदेकोत्तरषष्ठ्यधिकद्विसहस्त्री (2601) संख्याका भेदाः स्युः। संशयास्पदत्वमनुग्राह्यानुग्राहकत्वमेकव्यञ्जकानुप्रवेशश्चेति त्रिविधः सङ्करः। मिथोनिरपेक्षरूपैकविधा संसृष्टिश्च। तेन तया च गुणनं चेत् वेदखाब्धिवियच्चन्द्राः (10404)। शुद्धभेदैः सह शरेषुयुगखेन्दवः (10455) इति।

एवं प्रतिपादितेषु शरेषुयुगखेन्दुरूपेषु ध्वनिभेदेषु असंलक्ष्यक्रमव्यङ्ग्यध्वनिः रसध्वनिः रसवादिभिः आचार्यैः विश्वनाथादिभिः काव्यस्यात्मत्वेन प्रतिपादितोऽस्ति-

**वाक्यं रसात्मकं काव्यम्**[25]

महर्षिव्यासेनाऽपि अग्निपुराणे-

**वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्।**[26]

इत्युक्तम्। काव्यशास्त्रे चेतनादपि रससम्प्रदायस्योदयो यात इति दर्शं दर्शं रसमहत्त्वं रसो विचार्यते-

## रसस्वरूपम्

शब्दार्थशरीरकस्य काव्यस्य काव्यत्वाधायकम् तस्यालौकिकत्वसम्पादकम्, लौकिकविज्ञापनादिमये शब्दार्थे काव्यत्वनिवारकम्, आलोचकलोचनोपलोचनभूतम्, सहृदयहृदयाऽऽर्जकं भवति किमपि तत्त्वं काव्ये, येनाह्लादिताः अनन्यपरायागमानसीभूताः, शब्दप्रधानवेदादिशास्त्रेभ्यः, अर्थतात्पर्यवत्पुराणेतिहासेभ्यश्च विलक्षणे काव्ये विगतिलवेद्यान्तरमानन्दमनुभवन्ति, यं प्राप्य च सुधामपि मुधा मन्यन्ते सहृदयास्तत्त्वं रस एवास्ति-

**रसैः कथा यस्य सुधावधीरणी**[27]

यद्यप्येतावता रसस्वरूपं स्वयमेव प्रतिपादितं जातं तथापि रसस्य किं स्वरूपमिति विशेषजिज्ञासायामुक्तमस्ति साहित्यदर्पणे आचार्येण विश्वनाथेन-

**सत्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।**
**वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः॥**
**लोकोत्तरचमत्कारप्राणः कैश्चित्प्रमातृभिः।**
**स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥**

इति रसः- अखण्डः, स्वयं प्रकाशः, आनन्दमयः, ज्ञानस्वरूपः, वेद्यान्तरस्पर्शशून्यः, ब्रह्मास्वादसहोदर;, लोकोत्तरचमत्कारप्राणश्च भवति।

एवं दृश्यते यद् रसे ते सर्वे गुणाः भवन्ति ये खलु योगिभिः ब्रह्मतत्त्वे प्राप्यन्ते किन्तु स ब्रह्मास्वादसहोदर इति विशेषः।

## रसस्य ब्रह्मास्वादसहोदरत्वम्

यद्यपि ब्रह्मरसयोरतीवसाम्यं प्रतिपादितमस्ति, तथापि रसो ब्रह्मास्वादसहोदर इत्युच्यते। सहोदर इत्यस्यात्र लघुकोऽर्थः अर्थात् काव्यरसो ब्रह्मास्वादतो न्यूनो भवति। यतो हि-

**अपारे काव्यसंसारे कविरेकः प्रजापतिः।**
**यथास्मै रोचते विश्वं तथेदं परिवर्तते॥**

**शृङ्गारी चेत्कविः सर्वं काव्यं रसमयं जगत्।**
**स एव वीतरागश्चेन्नीरसं सर्वमेव तत्।।[28]**

इत्युक्तिदिशा रसः कवीच्छाधीनः, ब्रह्म तु न कस्यचिद् कारणत्वेन व्यपेक्षामपेक्षते। एवमितरेच्छाधीनत्वात् कोव्यरसास्वादो ब्रह्मास्वादापेक्षया न्यूनतां याति।

एवञ्च कारणगुणाः कार्यगुणानारभन्ते इति सर्वजनसम्मतनियमानुसारं कारणत्वेनापेक्षितस्य कवेः गुणाः अपि रसे भवन्ति तत्काव्येऽप्यल्पता निश्चितमेव। अत एव यथा ब्रह्मविद् ब्रह्मैव भवति इति व्यवहारः प्रचलति न तथा काव्यवित्काव्यमेव भवतीति व्यवहारो जायते।

काव्यरसनिष्पत्तौ विभावादयः कारणनि भवन्ति। यावद् विभावादयो भवन्ति तावदेव रसानुभूतिरपि जायते रसस्य विभावादिजीवितावधित्वात्[29] विभावादिविनष्टे नानुभवगोचरो भवति रसोऽपि, ब्रह्मास्वादे तु विभावादयोऽन्ये वा केचन हेतवो न भवन्तीति रसास्वादो ब्रह्मास्वादान्न्यूनः सन् ब्रह्मास्वादसहोदर इत्युच्यते।

**रसनिष्पत्तिः**

नाटकं दर्शं दर्शं हर्षप्रकर्षमनुभवद्भिः सामाजिकैः विचारितं यत् किमस्ति नाटके येन आनन्दानुभूतिर्जायते? तदा तैः विचारितं यत् नायक-नायिका एव सन्ति नाट्ये आनन्दहेतव इति- विभाव एव रसः इति सिद्धान्तो यातः। पश्चाच्च नहि नायकनायिकाः हर्षकारणानि, अपि तु तैः प्रतिपादितैः कार्यैः आनन्दानुभूतिरिति अनुभाव एव रसः इति सिद्धान्तो निश्चितः। गवेषणापरैः सहृदयैः ततः प्रतीतं यत् न नायकनायिकाः आनन्दानुभूतौ कारणानि न च तत्स्थूलानि कार्याणि, अपि तु नायकनायिकानां सूक्ष्माभिः चेष्टाभिः। अतएव व्यभिचारिभाव एव रसः इति सिद्धान्तो यात। ततश्च त्रिषु य एव चमत्कारी स एव रसः इति रसनिष्पत्तिविषये बहूनां सिद्धान्तानां दिग्दर्शनं रसगङ्गाधरे पण्डितराजजगन्नाथेन उपस्थापितमस्ति।

एतेषामनेकेषां सिद्धान्तानामनन्तरं रसनिष्पत्तिविषये भरतमुनेः समागमनं यातम्। तैरुक्तं न केवलं विभावो रसः, नानुभावः, न च व्यभिचारिभावः, अपितु स्थायिभावेन सह विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः इति। एतदेव भरतसूत्रमादाय साहित्यकौमुदीकारेण श्रीविद्याभूषणेन-

**कारणान्यथ कार्याणि सहकारीणि यानि च।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः।।**
**विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः।**
**व्यक्तः स तैर्विभावाद्यैः स्थायीभावः स्मृतो रसः।।[30]**

भरतसूत्रस्थयो: संयोगात् निष्पत्ति: इति पदयो: अनेकैराचार्यै: अनेकप्रकारेण व्याख्या कृता। तथा च रसनिष्पत्तिविषये अनेके वादा: प्रचलिता:। यथा- उत्पत्तिवाद:, अनुमितिवाद:, भुक्तिवाद:, अभिव्यक्तिवादश्चेति। यद्यपि एतेषां प्रतिपादनमत्र साहित्यकौमुद्यां नास्ति तथापि सामान्येन तेषां परिचय: उपस्थाप्यते-

**उत्पत्तिवाद:**

उत्पत्तिवादस्य समर्थक आचार्योऽस्ति मीमांसको भट्टलोल्लट:। तेषां मतानुसारम्- संयोगपदस्य क्रमश: उत्पाद्योत्पादकभावसम्बन्ध:, गम्यगमकभावसम्बन्ध:, पोष्यपोषकभाव- सम्बन्धश्चेत्यर्थ: अर्थात् स्थायिभावेन सह विभावस्योत्पाद्योत्पादकभावसम्बन्धो भवति, अनुभावस्य गम्यगमकभावसम्बन्ध:, व्यभिचारिभावानां च पोष्यपोषकभावसम्बन्ध इति विभावै: उत्पादित:, अनुभावैस्तु प्रतीतियोग्य: कृत:, व्यभिचारिभावैस्तु पुष्ट: रत्यादिक: स्थायिभावो रसो भवति। स च वस्तुतो रामादावनुकार्ये तद्रूपतानुसन्धानाच्च नर्तके नटे तथा भवति यथा असर्पभूतायामपि रज्ज्वां सर्पत्वप्रतीति: भयञ्च जायत इति। एवञ्च निष्पत्तिपदस्य क्रमश: उत्पत्ति:, प्रतीति:, पुष्टिश्चार्थ:।

**अनुमितिवाद:**

अनुमितिवादस्य समर्थक आचार्योऽस्ति नैयायिक: श्रीशङ्कुक:। तेन न्यायशास्त्राऽनुसारं भरतसूत्रस्य व्याख्या कृता। तदनुसारं भरतसूत्रस्थस्य संयोगात्पदस्य गम्यगमकभावसम्बन्धात् निष्पत्तिपदस्य च अनुमिति: अर्थ:। एवञ्च रङ्गमञ्चे उपस्थितं नटं रामं नेपथ्ये वर्तमानं दृष्ट्वा सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिविलक्षणरूपेण चित्रतुरगन्यायेन रामोऽयमिति रूपेण प्रतीतिर्जायते। ततश्च तेन प्रकटितै: कार्यै: रामोऽयं सीताविषयकरतिमान् कटाक्षमत्त्वात् अनुमीयन्त इति स्थायिभावेन भावादीनां गम्यगमकभावसम्बन्धात् नटे रसस्य निष्पत्ति: अर्थाद् अनुमितिर्जायते इति।

**भुक्तिवाद:**

भुक्तिवादी आचार्योऽस्ति सांख्यमतावलम्बी भट्टनायक:। तन्मतानुसारं काव्ये नाट्ये च अभिधया पदार्थोपस्थितौ अनन्तरं भावकत्वेन व्यापारेण साधारणीकरणं जायते। तच्च साधारणीकरणं रामसीतादिविशेषांशपरिहार: नायकोऽयं नायिकेयमिति च रूपेण ज्ञानम्, तथा च देशकालपरिस्थित्यादिषु सामान्यत्वमिति। एवञ्च साधारणीकृतेषु विभावादिषु भोजकत्वेन तृतीयेन व्यापारेण सामाजिकेन रसस्य भुक्ति: क्रियते।

**अभिव्यक्तिवाद:**

रत्यादय: स्थायिभावा: पूर्वत एव सामाजिकानां मनसि वर्तमाना: भवन्ति। काव्ये नाट्ये वा साधारणीकरणव्यापारमहिम्ना साधारण्येन प्रतीतै: अलौकिकै: विभावादिभि:

ते स्थायिभावास्तथैव अभिव्यज्यन्ते यथाऽन्धकारे पतितं घटं दीपः प्रकाशयति। एवं विभावादिभिरभिव्यक्तः सामाजिकमनसि वर्तमानः स्थायिभावः, वेद्यान्तरस्पर्शशून्यत्वेन, ब्रह्मास्वादसहोदरत्वेन च प्रतीतिविषयीकृतो रस इति। एवं स्थायिभावेन विभावादीनां व्यङ्ग्यव्यञ्जकभावसम्बन्धो भवति, रसस्य निष्पत्तिश्चाभिव्यक्तिः इति।

एतेषां सर्वेषां रसनिष्पत्तिसिद्धान्तानां सङ्कलनेनोक्तम्-

**व्यक्तः स तैर्विभावाद्यैः स्थायीभावः स्मृतो रसः।** इति।

**रससंख्या**

संस्कृतकाव्यशास्त्रग्रन्थानामध्ययने रससंख्याविषये भूयान् मतभेदो दृश्यते। अतः ऐतिहासिकक्रमेण तत्तदाचार्याणां मतानुसारं रसानां संख्याऽत्रोपस्थाप्यते-

**भरतमुनिः-** रसानां सम्यग्व्यवस्था भरतेन कृतेति रससम्प्रदाये स प्रथमो गण्यते। अनेन नाट्यशास्त्रे काव्यजीवातुभूताः अष्टौ रसाः निरूपिताः सन्ति-

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।**
**बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः।।**

इयं रससंख्या भरतेन स्वमतानुसारं नहि प्रतिपादिताऽस्ति, अपितु ततोऽपि पूर्वतरेण आचार्येण द्रुहितेन प्रतिपादिताऽस्ति या केवलं भरतेन समर्थिताऽस्ति। यथा स्वयमेवोक्तं तेन महामुनिना भरतेन-

**एते ह्यष्टौ रसाः प्रोक्ताः द्रुहिणेन महात्मना।**

नाट्यशास्त्रस्य प्रमुखो व्याख्याताऽभिनवगुप्तस्तु नाट्यशास्त्रस्याभिनवां व्याख्यां कृतवान् यत्- भरतमुनिनाऽपि नवरसाः प्रतिपादिताः सन्ति, शान्तोऽपि नवमरसतया तेनाऽङ्गीकृतोऽस्ति किन्तु नाट्ये शान्तरसविरोधिभिः-

**बीभत्साद्भुतशान्ताश्च नव नाट्यरसाः स्मृताः।।** इत्यस्यस्थाने-

**बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः।**[31]

इति पाठोऽङ्गीकृतोऽस्ति। भरताङ्गीकृतरससंख्याविषये पण्डितराजजगन्नाथेन काचिन्नूतनैवोद्भावना कृता यत् - नाट्ये अष्टौ रसाः, काव्ये च नवरसा भवन्तीति भरतेन सम्मतम्। यथा रसगंगाधरे-

**स च-**

**शृङ्गारः करुणः शान्तो रौद्रो वीराद्भुतस्तथा।**
**हास्यो भयानकश्चैव, बीभत्सश्चेति ते नव।।**
**इत्युक्तेर्नवधा। ....... मुनिवचनं चात्र प्रमाणम्।**[32]

रसगङ्गाधरस्य टीकायां बदरीनाथझामहोदयेन भरतकारिकाप्युद्धृतास्ति-

**शृङ्गारहास्यकरुणरौद्रवीरभयानका: ।**
**बीभत्साद्भुतशान्ताश्च काव्ये नव रसाः स्मृताः।।**

इति अभिनवगुप्तस्य पण्डितराजस्य चेयं कल्पना युक्तिपूर्णा नैव प्रतीयते यतोहि बहुषु स्थलेषु भरतेनाष्टानामेव रसानां गणना कृताऽस्ति। उत्पत्ति- वर्णाऽधिदेवताप्रसङ्गेऽपि सुस्पष्टतोऽष्टावेव रसाः सन्ति परिगणिताः।[33]

भावगणनाप्रसङ्गेऽपि एकोनपञ्चाशद्भावानां वर्णनमस्ति। तेषु अष्टौ स्थायिभावाः, अष्टौ सात्विकाः, त्रयस्त्रिंशद्व्यभिचारिभावा इति मिलित्वा 49 एकोनपञ्चाशद् भावाः परिगणिताः सन्ति-[34]।

एष्वपि प्रसङ्गेषु अभिनवगुप्तेन वैकल्पिकपादानां कल्पनां कृत्वा व्याख्यायाः प्रयत्नः कृतः किन्तु सर्वत्र पादपरिवर्तनकल्पना औचित्यं न बिभर्ति पंडितराजकल्पना तु किञ्चिदौचित्यं बिभर्ति- यत् नाट्येऽष्टौ काव्ये च नव रसाः भरतेनाङ्गीकृता इति। केषुचित् संस्करणेषु केषाञ्चिन्मते कारिकेयं नाट्यशास्त्रे यथावद् दृश्यतेऽपि। नाट्यशास्त्रे नाट्यस्यैव विवेच्यत्वात् वर्णदेवतादिप्रकरणे भावगणनाप्रकरणे वा अष्टानामेव गणना कृता न काव्यसम्मतस्य शान्तस्य नवमस्येति कल्पना कर्तुं शक्यते किन्तु अस्याः दुरूहकल्पनायाः अपेक्षया काव्ये नव रसाः स्मृताः इत्यस्य प्रतिक्षप्तत्वकल्पनाया एव सुकरत्वात् । भरतसम्मतनवरससंख्याविषये पण्डितराजोक्तिस्तु भ्रान्तिपूर्णैवाऽस्ति। मन्येऽन्येषां नाट्यशास्त्रव्याख्यातॄणां मतमेव (यथाऽ ग्रे प्रदर्शयिष्यते ) पण्डितराजेनोद्धृतमस्ति।

**दण्डी -** दण्डिनाऽपि काव्यादर्शे अष्टावेव रसाः सम्मताः सन्ति-

**इह त्वष्टरसायत्ता रसवता स्मृता गिराम्।**

दण्डी त्वलङ्कारवादी आचार्योऽस्ति। तेन रसानां रसवदाद्यलङ्कारेऽन्तर्भावः कृतः तथापि रसानामष्टौ संख्योक्ताऽस्ति।

**उद्भट** आचार्येणोद्भटेन रसानां नवसंख्या निर्भ्रान्तरूपेण प्रतिपादिता-

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।**
**बीभत्साद्भुतशान्ताश्च नव नाट्ये रसाः स्मृताः।।**[35]

किन्तूद्भटेन काव्यालङ्कारसंग्रहे शान्तस्य गणनामात्रमेव कृतमस्ति, शान्तरसस्य स्थापना तेन नैव कृता तत्र। अनेनेदं प्रतीयते यत् शान्तरसस्य कल्पना उद्भटादपि पूर्वं केनचिदन्येन कृता। विधिसम्मता स्थापना च अन्या। नामसङ्कीर्तनं कृत्वा तस्य स्थापनाऽभावः उद्भटे नौचित्यं प्रतिपादयति।

अथवेदमपि भवितुर्महति यत्- उद्भटेन नाट्यशास्त्रस्य व्याख्यापि कृताऽस्ति या साम्प्रतं दुर्दैववशान्नोपलभ्यते। शान्तरसस्य स्थापनं तत्रैव कृतमुद्भटेन काव्यालङ्कारसंग्रहे

तु परिगणनैव कृता केवलम्। मन्ये उद्भटस्यैवेमां कारिकामादाय अभिनवगुप्तेन नाट्यशास्त्रे पाठपरिवर्तनस्य कल्पना कृता तथा चाधुनिकैः काव्ये नव रसाः स्मृताः इति कारिकायाः स्पष्टोल्लेखात्, उद्भटस्याभिनवगुप्तापेक्षाया प्राचीनत्वाच्च।

**रुद्रटः**

रससंख्याविषये उद्भटानन्तरं रुद्रट एव परिगणनीयोऽस्ति। वामनेन रसावर्णनात्। रुद्रटेन तु पूर्वोक्तनवरसापेक्षया प्रेयान् नामकः दशमोऽपि रसोऽङ्गीकृत :-

**शृङ्गारवीरकरुणा बीभत्सभयानकाद्भुता हास्यः।**
**रौद्रः शान्तः प्रेयानिति मन्तव्याः रसाः सर्वे ।।**[36]

स्नेहस्थायिभावकः प्रेयान् रसो रुद्रटस्य स्वकीया कल्पनाऽस्ति यद्यपि रुद्रटोऽस्त्यनन्तरसवादी। स कथयति- भरतादिभिः मधुरादीनामिवास्वाद्यत्वात् स्थायिभावा रसा इत्युक्ताः, आस्वाद्यता तु निर्वेदादिष्वप्यस्तीति तेऽपि रसनाम्ना व्यवहर्तुं शक्यन्ते एव-

**रसनाद्रसत्वमेतेषां मधुरादीनामिवोक्तमाचार्यैः।**
**निर्वेदादिष्वपि तन्निकाममस्तीति तेऽपि रसाः।।**[37]

एवं व्यभिचारिणामपि रसत्वे रससंख्याऽनन्ततां यास्यति, तथाऽपि पूर्वोक्तकारिकायां स्पष्टमुखेन प्रेयान्रसस्य नामग्राहं निर्देशः कृत इति तन्मते दशरसाः स्वीक्रियन्ते।

**धनञ्जयः**

यद्यपि कालक्रमशः रुद्रटानन्तरमनेके आचार्याः सन्ति रसप्रतिपादकाः- आनन्दवर्धन-महिमभट्ट-मम्मटादयः किन्तु तैः रससंख्याविषये काचिन्नवीनोद्भावना नास्ति कृतेति धनञ्जयः उपस्थाप्यते। धनञ्जयेनापि अष्टनवसंख्यायाः विवादस्य समाधानमात्रमेव कृतम्। नाट्येऽष्टानामेव रसानां सम्भवः। ये तु शमस्थायिभावकं शान्तरसं स्वीकुर्वन्ति तत्तु श्रव्यकाव्य एव घटते रूपकेषु शान्तस्य पुष्टिर्नैव भवति।

**शममपि केचित्प्राहुः पुष्टिर्नाट्येषु नैतस्य।**[38]

अनेन सुस्पष्टमेव प्रतीयते काव्ये नवरसाः धनञ्जयेनाभिमताः सन्ति। किन्तु धनञ्जयेनापि रूपकव्याख्यानमेव कृतमिति शान्तो रसो न विवेचितः। धनञ्जयेन प्रेयान्- रसस्य, भक्तिरसस्य, कैश्चित् प्रतिपादितस्य मृगयारसस्य अक्षरसस्य च निराकरणमपि कृतम्-

**प्रीतिभक्त्यादयो भावा मृगयाऽक्षादयो रसाः।**
**हर्षोत्साहादिषु स्पष्टमन्तर्भावान्न कीर्तिताः।।**[39]

**अभिनवगुप्तः-**

रसैकपक्षपातिना रसस्यान्यतमसमर्थकेन रसविषये सिद्धान्तमतस्था-पकेन अभिनवगुप्तपादेन सर्वतोभावेन नाट्ये काव्ये चोभयत्र शान्तो रसः प्रतिष्ठापितोऽस्ति।

अभिनवगुप्तेन एवकारेण रसस्य नवसंख्या सम्मताऽस्ति- **एवं ते नवैव रसा**[40] अन्येषां विदुषां मतं प्रदर्शयता तेन स्नेहरसः, लौल्यरसः, भक्तिरसश्चेति त्रयोऽन्येऽपि रसाः प्रतिपादिताः किन्तु तेषां मुख्यनवरसेष्वन्तर्भावत्वं प्रतिपादितम्। आर्दतास्थायिभावकस्य स्नेहरसस्य रतौ, गर्वरूपस्थायिभावकस्य लौल्यस्य रतौ अन्यत्र वा कस्मिंश्चिद्रसे भक्तिरसस्य च रतौ भावे वाऽन्तर्भावः[41] इति। इति न सन्ति रसाः नवातिरिक्ता इति तन्मतम्।

**भोजराजः**

भोजराजेन रससंख्यायां विस्तारः कृतः। अनेन स्वग्रन्थयोः शृङ्गार-प्रकाश-सरस्वतीकण्ठाभरणयोः समुपलब्धानां सर्वेषां मतानां सङ्ग्रहः कृतः। तेन प्रसिद्ध-नवरसातिरिक्तम्- प्रेयान्, उदात्तः, उद्धतः- इति त्रयोऽन्ये रसाः स्वीकृताः ....... प्रेयांसः शान्तोदात्तोद्धता रसाः।[42] डॉ. राघवन् महोदयेन भोजकृतशृङ्गारप्रकाशस्योद्धरणमुपस्थाप्य प्रेयान्शान्तोदात्तोद्धतरसानां नायकभेदानुसारं कल्पना कृता, धीरललितानुसारं प्रेयन् रसस्य, धीर-प्रशान्तानुसारं शान्तस्य, धीरोदात्तानुसारं धीरोदात्तस्य, धीरोद्धतानुसारञ्चोद्धतरसस्य कल्पना कृताऽस्ति।[43]

**रामचन्द्र-गुणचन्द्रः**

हेमचन्द्रेण तु काव्यानुशासने अभिनवगुप्तसरणिरेवाश्रिता किन्तु तच्छिष्येण रामचन्द्र-गुणचन्द्रेण तु नाट्यदर्पणे नवरसातिरिक्तं व्यसनदुःख-सुखानां त्रयाणामन्येषामपि रसानामुल्लेखः कृतः। तत्र व्यसनस्य स्थायिभावस्तृष्णा, दुःखरसस्य स्थायिभावो रतिः, सुखरसस्य च स्थायिभावः सन्तोष इति तेन प्रतिपादितमस्ति।[44]

**विश्वनाथः**

कविराजेन विश्वनाथेन दशमरसरूपेण वात्सल्यरसः स्वीकृतः-

**स्फुटं चमत्कारितया वत्सलं च रसं विदुः**[45]

**भानुदत्तः**

रसतरङ्गिण्यां भानुदत्तेन रसानां द्विविधं वर्गीकरणं कृतम्- लौकिकः, अलौकिकश्चेति-

**स च रसो द्विविधो लौकिकोऽलौकिकश्च**[46]

तत्र लौकिकसन्निकर्षजन्यो लौकिकः, अलौकिकसन्निकर्षजन्योऽलौकिकः। षड्विधलौकिकसन्निकर्षजन्यत्वाल्लौकिकः षड्विधः- मधुराम्ललवणकटुकषायतिक्तभेदात्, अलौकिकसन्निकर्षजन्योऽलौकिकस्तु प्रथमं त्रिविधः- स्वाप्निकः, मनोरथिकः, औपनयिकश्चेति। एषु स्वप्ने प्राप्तो रसः स्वाप्निकः, मनोरथजन्यो मानोरथिकः। स्वाप्निकमानोरथिकौ तु सुखदुःखात्मकौ। तृतीयस्तु काव्यपदपदार्थजन्यः औपनयिक

इति। स च परम्पराक्रमेण प्राप्तो नवविधः- शृङ्गार-हास्य-करुण-रौद्र-वीर- भयानक-बीभत्साऽ द्भुतशान्ताश्चेति। ततश्चापि वात्सल्य- लौल्य- भक्ति-कार्पण्य- मायारसश्चेति चत्वारोऽन्येऽपि भवन्ति रसाः।[47]

एषु वात्सल्य-लौल्य-भक्तिरसानां मान्यता तु पूर्वत एव यथाकथञ्चिदस्ति, अभिनवगुप्तेन अभिनवभारत्यां स्नेहलौल्यभक्तिरसानां खण्डनत्वात्, किन्तु मायारसस्य कार्पण्यरसस्य चेति कल्पना भानुदत्तस्य स्वकीया कल्पनाऽस्ति। मायाकार्पण्यरसौ भानुदत्तेन प्रतिष्ठापितौ।

अनेन शान्तरसस्य समकक्षकत्वेन मायारसः प्रतिष्ठापितः। अस्मिन् विषयेऽस्य मान्यताऽस्ति यत् यदि चित्तवृत्तिनिरोधे शमप्रधानकः शान्तरसः स्वीक्रियते तदा चित्तवृत्तेः मायारसोऽपि नापलापार्हः। अन्यत्र रत्यादिषु मायारसस्यान्तर्भावस्य खण्डनमप्यनेन कृतम्। तद्यथा-

चित्तवृत्तिर्द्विधा प्रवृत्तिर्निवृत्तिश्चेति। निवृत्तौ यथा शान्तरसस्तथा प्रवृत्तौ मायारस इति प्रतिभाति। एकत्र रसोत्पत्तिरपरत्र नेति वक्तुमशक्यत्वात्। न च स रतिरेव स कस्यास्तु व्यभिचारी। न शृङ्गारस्य, तद्वैरिणौ बीभत्सस्यापि तत्र सत्त्वादत एव न बीभत्सस्यापि ........ नापि शान्तस्य तद्विरोधित्वात्। न च सामान्य एव रसस्तद्विशेषा इतरे भवन्ति। शान्तरसस्य तर्हि रसाभासत्वापत्तेः। किन्तु विद्युत इव रतिहासशोकक्रोधोत्साहभयजुगुप्सा-विस्मयास्तत्रोत्पद्यन्ते विलीयन्ते च। तेन तत्र ते व्यभिचारीभाव इव लक्षणं च प्रबुद्धमिथ्या-ज्ञानवासना मायारसः। मिथ्याज्ञानमस्य स्थायिभावः। विभावाः सांसारिकभोगार्जकधर्माधमाः। अनुभावाः पुत्रकलत्रविजयसाम्राज्यादयः।[48] स्पृहास्थायिभावकस्य कार्पण्यरसस्यापि प्रतिष्ठापनं भानुदत्तेन कृतम्। स कथयति-

ननु वात्सल्यं लौल्यं भक्तिः कार्पण्यं वा कथं न रसः। आर्द्रताऽ भिलाषश्रद्धास्पृहाणां स्थायिभावानां सत्वादिति?

केनचिदाचार्येणोन्मादोऽ पि रसत्वेन स्वीक्रियते। कस्यायं विचार इति नामग्राहं न कथयितुं शक्यते किन्तु साहित्यदर्पणेऽस्य विरोधो दृश्यते। साहित्यदर्पणे विश्वनाथेन- कुतोऽपि कारणात् क्वापि स्थिरतामुपयन्नपि उन्मादादिः स्थायिभावो न भवति। स्थैर्याभावादित्युक्त्वोन्मादस्य सुस्पष्टमुखेन खण्डनं कृतम्-

**कुतोऽपि कारणात्क्वापि स्थिरतामुपयन्नपि।।**
**उन्मादादिर्नतु स्थायी न पात्रे स्थैर्यमेति च।।**

**विद्याभूषणः**

रससंख्याविषये विद्याभूषणेन तु **शृङ्गारहास्यकरुणरौद्रवीर भयानकाः।।**
**बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः।।**

इत्युक्त्वा शान्तस्यापि श्रव्यकाव्यप्रसङ्गे रसत्वमङ्गीकृत्य शान्तोऽपि नवमो रसः इति प्रतिपाद्य रसानां नवसंख्या निर्धारिताऽस्ति, तथापि रसस्येयत्ता नवसंख्यात्वेन न तदभिमता अपितु दास्य- सख्य- वात्सल्याः त्रयोऽन्येऽपि रसास्तदभिमताः सन्ति। यथोक्तम्-

ननु दास्यसख्यवात्सल्यास्त्रयो रसाः परे सन्त्यनुभूयन्ते च तज्ज्ञैस्ततः कथमत्र नवैवेति चेत्, सत्यम्। तथापि नात्र ते निरूप्यन्ते। नवैव रसाः, परे तु भावाः इति स्वतन्त्रेच्छेन मुनिना परिभाषणात्।[50]

अनेन प्रतीयते यत् मुनिकारिकाव्याख्यापरेणानेन नवरसास्तदभिमताः व्याख्याताः, त्रयोऽन्ये दास्य- सख्य- वात्सल्याः न व्याख्याताः। यद्यपि तेऽस्याभिमताः सन्ति। एवं विद्याभूषणमते द्वादशरसाः सन्ति- शृङ्गार-हास्य-करुण-रौद्र-वीर-भयानक- बीभत्साद्भुत- शान्त- दास्य- सख्य- वात्सल्या इति।

**शान्तोऽपि नवमो रसः**

साहित्यकौमुदीकारेण श्रीविद्याभूषणेन नाट्यशास्त्रानुसारं पूर्वम् अष्टौ नाट्ये रसाः स्मृताः इत्युक्त्वा शृङ्गार-हास्य-करुण-रौद्र-वीर-भयानक- बीभत्साद्भुता इति रससंख्यायां गणिताः। पश्चाच्च नवम-रसरूपेण शान्तः उपस्थापितः-

**शान्तोऽपि नवमो रसः**[51]

अस्यायं भावः- नाट्ये अष्टौ एव रसाः सन्ति शान्तस्य नाट्ये अनुपयुक्तत्वात्। यथोक्तम्-

**शान्तस्य शमसाध्यत्वान्नटे च तदसम्भवात्।**
**अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते।।**[34]

किन्तु काव्ये शान्तोऽपि रसो भवति। स च परिगणितेभ्यः शृङ्गार-हास्य-करुण- रौद्र-वीर-भयानक- बीभत्साद्भुतेभ्योऽतिरिक्तो नवमोऽस्ति।

नायं शान्तो रसः काव्यप्रकाशकारेण मम्मटेन साहित्यकौमुदीकारेण विद्याभूषणेन वा सिद्धान्तितः, अपि तु शान्तस्य रसत्वं ध्वनिकारेण श्रीमदानन्दवर्धनाचार्येणैव प्रतिपादितं महाभारतस्याङ्गीरसरूपेण शान्तं संसाधयता। महामुनिना भरतेनापि काव्ये शान्तो रसः स्थापितोऽस्ति। यथा- रसगङ्गाधरे श्रीपण्डितराजेन नवरसानां परिगणनां कृत्वा मुनिवचनं प्रमाणरूपेणोपन्यस्तम्-

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।**
**बीभत्साद्भुतशान्ताश्च काव्ये नवरसाः स्मृताः।।** इति ।

रसैकपक्षपातिना नाट्यशास्त्रस्य प्रमुखव्याख्यातृणा श्रीमदभिनवगुप्तेन शान्तरस एव मूलरसरूपेण व्यवस्थापितः। स्थायिभावानां रसत्वप्रतिपादनावसरे अभिनवगुप्तेन

शान्तरसस्यापि- शमरूपस्थायिभावात्मको रसः शान्तरसः इति रूपेण लक्षणं कृतम्। एकत्र नाट्यशास्त्रे शान्तरसस्य प्रतिपादनमपि दृश्यते-

**भावा विकारा रत्याद्याः शान्तस्तु प्रकृतिर्मतः।**
**विकारः प्रकृतेर्जातः पुनस्तत्रैव लीयते॥**
**स्वं स्वं निमित्तमासाद्य शान्ताद्भावः प्रवर्तते।**
**पुनर्निमित्तापाये च शान्त एवोपलीयते॥**[54]

अर्थाद् रत्यादयो भावा विकाराः सन्ति शान्त एव तेषां प्रकृतिरस्ति, शान्तादेव रत्यादयो जायन्ते इति प्रकृतेरुत्पन्नो विकारः पुनः प्रकृतावेव लयं याति तथैव स्वं स्वं कारणमाश्रित्य शान्तादेव सर्वे भावाः जायन्ते निमित्तानामपाये पुनस्तत्र शान्ते एव लीयन्ते।

किन्तु नाट्यशास्त्रीयोऽयमंशः प्रक्षिप्त एवं विभजति। अभिनवगुप्तेनास्य प्रमाणरूपेणोपस्थापनादभिनवगुप्ततः पूर्वमेवास्य प्रक्षिप्तता कल्पनीया भवति। शान्तरसविषयेऽभिनवगुप्तेनानेके युक्तिपूर्णास्तर्का उपस्थापिताः सन्ति-

(क) शान्तरसस्य स्थायिभावोऽस्त्यात्मज्ञानम्। यत् खलु परिकल्पितविषयभोगादिवासनायुक्तम्, शुद्धमानन्दमयञ्चास्ति। यथा- तेनैवात्मज्ञानानन्दादिविशुद्धधर्मयोगी परिकल्पितविषयभोगरहितोऽत्र स्थायी।[55]

वस्तुतस्तु रसस्य स्वरूपमिदमेवास्ति। रत्यादयः सर्वे भावा आत्मचैतन्यस्थितिमाप्त्वा शृङ्गारकरुणादिरसरूपतया परिणता भवन्ति। एवमात्मास्वाद एव सर्वरसानां मूलाधारः स एव च शान्तरसे (शमज्ञानादिरूपेण) स्थायिभावः इति सिद्धमेव शान्तस्योत्कृष्टरसत्वमिति शान्त एव प्रकृतिः अन्ये त्वस्य विकारा इति- शान्तस्तु प्रकृतिर्मतः इति व्याख्यातं प्रतिपादितं चाभिनवगुप्तेन।

## संस्कृतकाव्यशास्त्रे रससम्प्रदायः

रससिद्धान्तस्य प्रतिपादकः प्राचीनतमो ग्रन्थो नाट्यशास्त्रमेवास्ति। नाट्यशास्त्रे रसस्याङ्गोपाङ्गानां सविस्तरं वर्णनमस्ति। यद्यपि रससिद्धान्तस्याविर्भावो भरतात्पूर्वमेव जात इति विवादास्पदं नास्ति। यतो हि भरतप्रतिपादितसूत्राणां साङ्गोपाङ्गतया वर्णनमस्य सूचकमस्ति यदवश्यमेवास्य मूलाधारेण भाव्यम्। दृढमूलं विनास्य सविस्तरस्य रसप्रतिपादनस्य संभावनैव नास्ति।

किञ्च- विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः इति भरतसूत्रे स्थायिभावेन सह विभावानुभावसञ्चारिणां सर्वेषां संयोगे रसनिष्पत्तिरित्यतः पूर्वं विभावमात्रस्य ततश्चानुभावमात्रस्य ततश्च व्यभिचारिमात्रस्य रसत्वप्रतिपादनमवश्यमेव कल्पनीयम्,

यस्य खण्डनरूपेणैतेषां त्रयाणामपि समवाये रसत्वमङ्गीकृतम्। प्रतिपादितं चैतत्सर्वं रसगङ्गाधरे पण्डितराजजगन्नाथेन-

1 - विभाव एव रसः।

2 - अनुभाव एव रसः।

3 - व्यभिचारी भाव एव रसः।

4 - त्रिषु य एव चमत्कारी स एव रसः अन्यथा त्रयोऽपि न।

इति मतचतुष्टयस्य पश्चात् भरतस्याविर्भावो जातः। येन विभावमात्रस्य, अनुभावमात्रस्य, व्यभिचारिभावमात्रस्य रसत्वं खण्डयित्वा, विभावानुभावव्यभिचारिणां त्रयाणां संयोगाद्रसनिष्पत्तिरिति सिद्धान्तः स्थापितः। एवञ्च सिद्धैव भरतादपि पूर्वमविकलपरम्परा रसनिष्पत्तिविषये। नाट्यशास्त्रोद्धृतानुवंश्यश्लोकैरपि प्राक्तनो रससिद्धान्तः सङ्केतितः। यथोक्तं नाट्यशास्त्रव्याख्यातृणाऽभिनवगुप्तेन-

**ता एता ह्यार्या एकप्रघट्टकतया पूर्वाचार्यैर्लक्षणत्वेन पठिताः।**
**मुनिना तु सुखसङ्ग्रहाय यथास्थानं निवेशिताः।।**[56]

राजशेखरेण काव्यमीमांसायां ब्रह्मणः प्राप्तविद्येन काव्यपुरुषेण भरतं प्रति रूपकनिरूपणस्य नन्दिकेश्वरं प्रति रसाधिकारिकस्योपदेशः प्रतिपादितोऽ स्ति-

सोऽष्टादशाधिकरणीं दिव्येभ्यः काव्यविद्यास्नातकेभ्यः सप्रपञ्चं प्रोवाच। तत्र कविरहस्यं सहस्राक्षः ............... रूपकनिरूपणीयं भरतः, रसाधिकारिकं नन्दिकेश्वरः..... ततस्ते पृथक् पृथक् स्वशास्त्राणि विरचयाञ्चक्रुः।।[57]

एवं भरतेन रूपकनिरूपणं कृतम्, नन्दिकेश्वरेण च पृथग्ग्रन्थेन रसप्रतिपादनमिति सिद्धम्, तथापि भरतस्य रूपकनिरूपणात्मकं नाट्यशास्त्रं त्वविकलरूपेण दृश्यते किन्तु तत्समकालिकस्य नन्दिकेश्वरस्य रसप्रतिपादनात्मको ग्रन्थो नैवोपलभ्यते इति महद्‌दुर्भाग्यमस्ति। रसनिरूपणं भरतस्य प्रतिपाद्यो विषयो नासीत् रूपकनिरूपणप्रसङ्गत एव तेन संक्षेपेण रसनिरूपणं कृतमस्ति, किन्तु नन्दिकेश्वरग्रन्थस्याप्राप्तेः भरतस्य नाट्यशास्त्रमेव रससम्प्रदायस्य प्रवर्तकरूपेण स्वीक्रियते। यदि नन्दिकेश्वरस्य रसनिरूपणं स्यात्तदा रसस्य किमपि विलक्षणमेव स्वरूपं स्यात्।

डॉ. शङ्करन् तथा बलदेवउपाध्याय इत्यादिभिस्तु रससम्प्रदायस्य प्रवर्तकत्वेन आदिकविः महामुनिः वाल्मीकिरेव सम्मतोऽस्ति। निषदेन विध्यमानं क्रौञ्चयुगलयोरेकमपरञ्च विलपन्तं दृष्ट्वा शोकाकुलस्य महर्षेः वाल्मीकेर्मुखादकस्मादेव अक्षरपादसमायुक्ता वागस्फुरत्-

**मा निषाद प्रतिष्ठां त्वमगमः शास्वतीः समाः।**
**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।।**

इति। अयमासीन्नूतनच्छन्दसामवतारः। यं दृष्ट्वा ब्रह्मणाज्ञप्तेन तेन महर्षिणा रामायणस्य रचना कृता। एवं कथयितुं शक्यते यद् रामायणरचनायाः मूलाधारः क्रौञ्चवधजन्यमहर्षि-निष्ठशोक एवासीत्। यथोक्तं स्वयं तेनैव महर्षिणा-

**पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वितः।**
**शोकार्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा।।**
**समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महर्षिणा।**
**सोऽनुव्याहरणाद्भूयः शोकः श्लोकत्वमागतः।।**[58]

महाकविना कविताविलासेन कालिदासेनापि समर्थितं शोकस्य श्लोकत्वम्-

**तामभ्यगच्छद् रुदितानुसारी मुनिः कुशेध्माहरणाय यातः।**
**निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः।।**[59]

ध्वनिं काव्यात्मत्वेन व्यवस्थापयता ध्वनिवादिना आचार्येण आनन्दवर्धनेन वस्त्वलङ्काररसरूपेषु त्रिविधेष्वपि ध्वनिभेदेषु रसध्वनेरेव प्राधान्यमात्मत्वं वा प्रतिपादयता ऐतिहासिकप्रमाणरूपेण कालिदासवचनं समर्थयता वाल्मीकिरेव रसप्रवर्तकत्वेनाङ्गीकृतः-

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः।।**[60]

रसस्य प्रबलपक्षपातिना रसवादिष्वाचार्येषु प्रमुखं स्थानं प्राप्तवता अभिनवगुप्तेनापि ध्वन्यालोकस्य व्याख्यायां लोचने सर्वमनवद्यतया व्याख्यातम्-

स एव तथाभूतविभावतदुत्थाक्रन्दाद्यनुभावचर्वणया हृदयसंवादतन्मयीभवनक्रमा-दास्वाद्यमानतां प्रतिपन्नः करुणरसरूपतां लौकिकशोकव्यतिरिक्तां स्वचित्तद्रुतिसमास्वाद्यसारां प्रतिपन्नो रसपरिपूर्णकुम्भोच्चलनवच्चित्तवृत्तिनिष्पन्दस्वभाववाग्विलापादिवच्च समयानपेक्ष-त्वेऽपि चित्तवृत्तिव्यञ्जकत्वादिति नयेनाकृतकतयैवावेशवशादसमुचितशब्दच्छन्दोवृत्तादिनि-यन्त्रितश्लोकरूपतां प्राप्तः।[61]

एवं भवतु नाम रससिद्धान्तस्थापना वाल्मीकितो वा, रसानाञ्चवर्णादपि इत्युक्तिदिशाऽ-थर्ववेदतो वा भरतस्य नाट्यशास्त्रतो वा, अग्निपुराणतो वा किन्तु रससिद्धान्तस्य प्रतिपादकः, साङ्गोपाङ्गविचारकः सर्वप्रथमो ग्रन्थो नाट्यशास्त्रमेवास्ति सम्प्रति सहृदयानां समक्षमिति नास्ति सन्देहलवोऽपि।

अग्निपुराणकारेण, वाल्मीकिना, भरतेन वा नहि केवलं रससिद्धान्तः स्थापितः, अपि तु काव्ये तस्यैव प्राधान्यमपि प्रतिपादितम्। यथा-

**वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्।**

किञ्च-

लक्ष्मीरिव विना त्यागान्न वाणी भाति नीरसा इत्यग्निपुराणे महर्षिणा व्यासेन। तथा च- करुणरसस्थायिभावकस्य शोकस्य श्लोकरूपेण परिणतिकारकेन आदिकविना वाल्मीकिना, तथा-

**मृदुललितपदाढ्यं गूढशब्दार्थहीनं**
**जनपदसुखबोध्यं युक्तिमन्नृत्ययुक्तम्।**
**बहुकृतरसमार्गं सन्धिसन्धानयुक्तं**
**भवति जगति योग्यं नाटकं प्रेक्षकानाम्।।**

इति नाटकलक्षणे बहुकृतरसमार्गतया, किञ्च-

**एवं रसानां भावानां व्यवस्थानमिह स्मृतम् ।**
**य एवमेताञ्जानाति स गच्छेत्सिद्धिमुत्तमाम्।।**
**एतद्रसेषु भावेषु सर्वकर्मक्रियास्वपि।**
**दुःखार्त्रानां श्रमार्त्तानां शोकार्त्तानां तपस्विनाम्।**
**विश्रान्तिजननं काले नाट्यमेतन्मया कृतम्।।**

इति महामुनिना भरतेन, तथा च- तेन रस एव नाट्यम्[62] इति प्रतिपादयता अभिनवगुप्तेन काव्ये रसस्यैव प्राधान्यमपि प्रतिपादितम्, किन्त्वियं रसप्राधान्यपरम्परा भरतानन्तरं विच्छिन्ना सञ्जाता। काव्यानां महाकाव्यानां नाटकानाञ्च निर्माणं जातं किन्तु काव्यशास्त्रे (अलङ्कारग्रन्थेषु) रससम्प्रदायः (रसप्राधान्यव्यवस्था) बहुविलम्बतो जातः।

भरतस्य नाट्यशास्त्रानन्तरं षष्ठशताब्दीतो नवमशताब्दीं यावत् काव्यशास्त्रे रससम्प्रदायस्य कृते महद्दुर्दिनमासीत्। अस्मिन् समये रसविरोधिनोर्द्वयोः सम्प्रदाययोः अलंकारसम्प्रदाय- रीतिसम्प्रदाययोः प्रादुर्भावो जातः। तत्रालङ्कारसम्प्रदायस्य प्रवर्तकोऽस्ति भामहः। येन शब्दार्थयोः साहित्यस्य काव्यत्वं प्रतिपादयता अलंकारस्य काव्यात्मत्वमङ्गीकृतम्-

**न कान्तमपि निर्भूषं विभाति वनिताननम्।।**[63]

भामहो रसवदलङ्कारे रसस्यान्तर्भावत्वं प्रतिपादितवान्। यत्र शृंगारादीनां रसानां स्पष्टं वर्णनं स्यातत्र रसवदलङ्कार इति मत्वा रसवदलङ्कारस्य लक्षणं तेन कृतम्-

**रसवद् दर्शितस्पष्टशृङ्गरादिरसं यथा।**

यद्यपि महाकाव्यप्रसङ्गे तेन रसो मनाक् स्पृष्टः, किन्तु तदप्यौदासिन्येनैव यथा-

**स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुंजते।**
**प्रथमालीढमधवः पिबन्ति कटुभेषजम्।।**

एवञ्च शास्त्रग्रहणीयकाव्यरसस्तथैवाङ्गीकृतः, यथा कटुभेषजपानार्थं पूर्वं मधुन आवश्यकता भवति। अतो यथा भेषजपाने प्राधान्यम्, मधुपाने चाप्राधान्यम् तथैव शास्त्रस्य प्राधान्यम्, काव्यरसस्य चाप्राधान्यमिति तन्मतम्।

यथा रसस्य रसवदलङ्कारेऽ न्तर्भावस्तथैव देवविषयकरतिभावस्य प्रेयोऽ लङ्कारे, देवविषयकोत्साहस्य च ऊर्जस्व्यलङ्कारेऽ न्तर्भावः- इति प्रतिपाद्यरसस्य च महत्त्वमेव तेनाच्छादितम्।

भामहेन स्थापितस्यास्यालङ्कारसम्प्रदायस्य दण्डिरुद्रटोद्भटादिभिः समर्थनं कृतम्। दण्डिना काव्यादर्शे भामहमनुसरता शब्दार्थसाहित्यस्य काव्यत्वं रसस्य च रसवदलङ्कारेऽ न्तर्भावत्वमङ्गीकृतम्। ललितपदप्रयोगनिपुणेन दण्डिना यद्यपि रससंस्कारो नैव व्यक्तः किन्तु काव्यस्यात्मत्वेन रसो नैव प्रतिपादितः। रसवासनावासितेन अनेकैरुदाहरणैः रसस्य रसवदलङ्कारेऽ न्तर्भावं प्रतिपादयताऽलङ्कारम्प्रति दुराग्रह एव प्रदर्शितः। माधुर्यगुण-प्रतिपादने तेन कृतेऽपि प्रयासे रसो निरूपित एव-

**मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः।**
**येन माद्यन्ति श्रीमन्तो मधुनेव मधुव्रताः॥**
**यया कयाचिच्छ्रुत्या यत्समानमनुभूयते।**
**तद्रूपा हि पदा सन्तिः सानुप्रासा रसावहा॥**
**कामं सर्वोऽ प्यलङ्कारो रसमर्थे निषिञ्चतु।**
**तथाप्यग्राम्यताथैनं भारं वहति भूयसा॥**
**कन्ये कामयमानं मां न त्वं कामयसे कथम्।**
**इति ग्राम्योऽयमर्थात्मा वैरस्यायैव कल्पते॥**
**कामं कन्दर्पचाण्डालो मयि वामाक्षि निर्दयः।**
**त्वयि निर्मत्सरो दिष्ट्येत्यग्राम्योऽर्थो रसावहः॥**[44]

अनेन वस्तुतः शब्दार्थयोर्द्वयोरपि रसमयत्वं दण्डिना प्रतिपादितं तथापि शब्दस्य रसमयत्वे श्रुत्यनुप्रासत्वम् अर्थस्य च रसावहत्वे ग्राम्यत्वं कारणत्वेन सिद्धान्तितम्। ग्राम्यं वैरस्याय कल्पते तथा अग्राम्योऽर्थो रसावहो भवतीति प्रतिपादयता तेन सुस्पष्टमेव रसोऽङ्गीकृतः किन्तु तस्याप्राधान्यप्रतिपादने एव स दृढ़ाग्रहग्रहिलोऽस्ति।

उद्भटेन भामह एवादर्शरूपेण गृहीतः। स्वकीये काव्यालङ्कारसंग्रहे केवलमलङ्कारमेव सविस्तरं प्रतिपादिवान् रसस्तु संक्षेपेण रसवदादिप्रसङ्गे एवोदाहृतः। यद्यपि नाट्यरसरूपेण शृङ्गारादीन् परिगणयति।

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।**
**बीभत्साद्भुतशान्ताश्च नव नाट्ये रसाः स्मृताः॥**

तथापि रसादीनां स्पष्टप्रतिपादने रसवदलङ्कारत्वं सिद्धान्तयति-

**रसवद्दर्शितस्पष्टशृंगारादिरसोदयम् ।**
**स्वशब्दस्थायि-सञ्चारि-विभावाभिनयास्पदम्॥**

कामक्रोधादिकारणात् अनौचित्यप्रवृत्तानां भावानां रसानां च प्रेयोऽलङ्कारत्वं प्रतिपादयति-

**अनौचित्यप्रवृत्तानां कामक्रोधादिकारणात्।**
**भावानां च रसानां च बन्ध ऊर्जस्वि कथ्यते।।**

रसाभासभावाभासादीनाञ्च समाहितनामकेऽलङ्कारेऽन्तर्भावं करोति-

**रसभावतदाभासवृत्तैः प्रशमबन्धनम्।**
**अन्यानुभावनिः शून्यरूपं यत्तत्समाहितम्।।**

एवञ्च सुस्पष्टमेवास्ति भामहानुकरणमुद्भटस्य।

आचार्यरुद्रटोऽप्यलङ्कारसम्प्रदायसमर्थक एवास्ति। तेन स्वकीये काव्यालङ्कारे मुख्यरूपेणालङ्कारनिरूपणमेव कृतम्। नवाध्यायेषु सविस्तरमलङ्कारनिरूपणमेव कृतमस्ति काव्यालङ्कारे तथापि रुद्रटस्तथा रूढिवादी नासीत् यथा भामहादयः सन्ति। अनेन चतुर्ष्वध्यायेषु रसविवेचनमपि कृतम, रसवदलङ्कारस्तु नैवाङ्गीकृतो यत्र रसस्यान्तर्भावो भवेत्। काव्ये रसस्य महत्त्वमपि तेन प्रतिपादितम्-

**ननु काव्ये क्रियते सरसानामवगमश्चतुर्वर्गे।**
**लघु मृदु च नीरसेभ्यस्ते त्रस्यन्ति शास्त्रेभ्यः।**
**तस्मात्तत्कर्तव्यं यत्नेन महीयसा रसैर्युक्तम्।।**[65]

सरसस्य महाकाव्यस्य रचनायाः महाकविः अनल्पं यशः प्राप्नोति इति तन्मतम्-

**ज्वलुज्ज्वलवाक्प्रसरः सरसं कुर्वन् महाकविः काव्यम्।**
**स्फुटमाकल्पमनल्पं प्रतनोतिः यशः परस्यापि।।**[66]

प्रबन्धकाव्येषु रसैः सह धर्मार्थकाममोक्षाणां वर्णनं तेनं सिद्धान्तरूपेण स्वीकृतम्-

**जगति चतुर्वर्ग इति ख्यातिर्धर्मार्थकाममोक्षाणाम्।**
**सम्यक्तानमिदध्याद्रससंमिश्रान् प्रबन्धेषु।।**[67]

रसज्ञानेन विना कविः रमणीयस्य काव्यस्य निर्माणं नैव कर्तुं शक्नोति तथा च रसं विनां काव्यं नैव भवति सहृदयहृदयावर्जकं रमणीयञ्चेति-

**एते रसाः रसवतो रमयन्ति पुंसः**
**सम्यग्विभज्य रचिताश्चतुरेण चारु।**
**यस्मादिमानवधिगम्य न सर्वरम्यं**
**काव्यं विधातुमलमत्र तदाद्रियेत।।**[68]

तथापि रुद्रटस्यालङ्कारे पक्षपात इति नास्ति सन्देहः।

अतः परं संस्कृतकाव्यशास्त्रे रीतिसम्प्रदायस्योद्भवो जातः। तेन काव्यस्यात्मत्वेन रीतिर्व्यवस्थापिता-

**रीतिरात्मा काव्यस्य**[69]

तेन दीप्तरसत्वस्य कान्तिगुणत्वं प्रतिपादितम्-

**दीप्तरसत्वं कान्तिः**[70]

दीप्ता रसा शृङ्गारादयो यस्य स दीप्तरसः। तस्य भावो दीप्तरसत्वं कान्तिः इति व्याख्याय शृङ्गारः उदाहृतः-

**प्रेयान्सायमपाकृतः सशपथं पादानतः कान्तया**
**द्वित्राण्येव पदानि वासभवनाद् यावन्न यात्युन्मनाः।**
**तावत्प्रत्युत पाणिसम्पुटगलन्नीवीनितम्बं धृतो**
**धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः।।**

एवं रसान्तरेष्वप्युदाहार्यम् इत्युक्त्वा यद्यपि रसस्तेन स्वीकृतः किन्तु कान्तिगुणे तदन्तर्भावः कृतः। काव्यस्यात्मस्थाने तु रीतिमेव स्वीकृतवान्।

अलङ्काररीतिसम्प्रदायमेघाच्छादिते संस्कृतकाव्यशास्त्राकाशे किञ्चिद्विद्युत्प्रकाशो जातः। नवमशताब्द्याः अन्तिमे भागे दशमशताब्द्याः प्रथमभागे वा ध्वनिसम्प्रदायस्योदयो जतः। ध्वनिसम्प्रदायप्रवर्तकेन आनन्दवर्धनेन यद्यपि काव्यस्यात्मरूपेण ध्वनिरेव सिद्धान्तितः।

**काव्यस्यात्मा ध्वनिः**[71]

किन्तु वस्त्वलङ्काररसभेदेन ध्वनेस्त्रैविध्यं वस्तुतस्तु त्रिविधेष्वपि ध्वनिभेदेषु रसध्वनेरेव काव्यात्मत्वं प्रतिपादितम्। अतएवैतिहासिकप्रमाणरूपेण रस एवोदाहृतः -

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः।।**[72]

विविधव्यङ्ग्यव्यञ्जकभावप्रपञ्चितेऽपि काव्ये रसस्यैव प्राधान्यं प्रतिपादयता तेन रसादिमये कवेरवधानत्वं सङ्केतितम्-

**व्यङ्ग्यव्यञ्जकभावेऽस्मिन् त्रिविधे सम्भवत्यपि।**
**रसादिमय एकस्मिन्कविः स्यादवधानवान् ।।**[73]

संलक्ष्यक्रमव्यङ्ग्यस्यापि ध्वनेः रसोपकारकतयैव चमत्कारित्वं प्रतिपादितम्-

**अनुस्वानोपमात्माऽपि प्रभेदो य उदाहृतः।**
**ध्वनेरस्य प्रबन्धेषु भासते सोऽपि केषुचित्।।**

सुस्पष्टमुखेन रसाश्रयत्वेनैव गुणालङ्काररीतिवृत्त्यादीनां प्रतिपादनं कृतमस्ति ध्वनिकारेण। तन्मतानुसारं रसोऽङ्गी तदाश्रिताश्च गुणाः तथा च रसाङ्गभूतशब्दार्थयोराश्रिताः अलङ्कारा भवन्ति-

**तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।**
**अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत्।।**[74]

अलङ्कारविनिवेशने समीक्षां प्रतिपादयता तेन रसपरत्वेन अङ्गत्वेन चालङ्कार-निवेशनं सिद्धान्तितम् -

**विवक्षा तत्परत्वेन नाङ्गित्वेन कदाचन।**
**काले च ग्रहणत्यागौ नातिनिर्वहणैषता।।**
**निर्व्यूढस्यापि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम्।**
**रूपकादिरलङ्कारवर्गस्याङ्गत्वसाधनम् ।।**

ध्वनिकारमते रीतिरपि रसाभिव्यञ्जिकैवास्ति-

**गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा।**
**रसान्[76] ............................................................**

सुप्तिङ्वचनसम्बन्धकारकशक्तिकृत्तद्धितसमासादयः सर्वे रसमेवाभिव्यञ्जयन्ति रसाभिव्यञ्जकत्वेनैव चैतेषां महत्त्वं काव्ये नान्यथेति-

**सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः।**
**कृत्तद्धितसमासैश्च द्योत्यो लक्ष्यक्रमः क्वचित्।।**

आनन्दवर्धनेन सम्यग्रूपेण रसस्य महत्त्वं प्रतिपादितम्, रसपरिपाके एव तेन काव्यत्वं स्वीकृतं न त्वितिहासमात्रनिर्वहे- काव्यमुपनिबध्नता कविना सर्वात्मना रसपरतन्त्रेण भवितव्यम् ............ नहि कवेरितिवृत्तमात्रनिर्वहिणात्मपदलाभो भवति, इतिहासादेव तत्सिद्धेः[77]

चतुर्थोद्योते तेन सविस्तरं रामायणे करुणरसः, महाभारते च शान्तरसोऽङ्गित्वेन प्रतिपादित इति रससम्प्रदायस्तेन समुज्जृम्भितः पोषितश्चेति नास्ति सन्देहः।

अतः परं रससम्प्रदायस्य भाग्योदयो जातः। आनन्दवर्धनस्य समकालिकोऽस्ति भट्टलोल्लटः। अयं काव्यशास्त्रातिरिक्तं दर्शनस्यापि विद्वान् आसीदिति न हि केवलं भरतकृतरससूत्रं व्याख्यातवान् अपि तु रसं दार्शनिकधरातले प्रतिष्ठापयामास। रससिद्धान्ते भट्टलोल्लटः उत्पत्तिवादी आचार्यो मन्यते। अस्य भरतसूत्रव्याख्यानप्रक्रिया तद्वैशिष्ट्यञ्चाग्रे रसनिष्पत्तिनिरूपणप्रस्तावे विवेचयिष्यते। रसनिष्पत्तिविषये प्रचलितासु विविधविधविप्रतिपत्तिषु भट्टलोल्लटस्य मतं प्रथममस्ति। अनेन नूतनविधया रसनिष्पत्तिं प्रतिपादयता। क्रान्तिरेवोत्थापिता। रससम्प्रदाये यदादाय अनेकप्रकारिकाः व्याख्या जाताः रसमहत्त्वञ्च शिखरारूढं सञ्जातमिति रससम्प्रदायसम्वर्द्धने महद्योगदानमस्ति भट्टलोल्लटस्येति निश्चप्रचम्।

काव्ये सत्यपि निःसीमार्थसार्थे रसस्यैव प्राधान्यं भवतीति भट्टलोल्लटस्य दृढेन मतेन प्रभावितो राजशेखरो रसमहत्त्वविषये भट्टलोल्लटमेव निदर्शनं मनुते-

**अस्तु नाम निःसीमार्थसार्थः। किन्तु रसवत एव निबन्धो युक्तो न नीरसस्य इति अपराजितिः।**[78]

भरतानन्तरं भट्टलोल्लटेनैव सर्वप्रथमं रसस्वरूपं महत्त्वञ्च दृढतया प्रतिपादितमिति। अतः परं संस्कृतकाव्यशास्त्रे भरतसूत्रव्याख्यातृरूपेण श्रीशंकुकस्यागमनं जातम्। रसनिष्पत्तिप्रक्रियायामनुमानवादी आचार्योऽस्ति। अनेन रसस्वरूपम्, रसनिष्पत्तिः, काव्ये रसस्य स्थानञ्चेत्यादिविषयाः सम्यक् निरूपिताः सन्ति। अनुमानद्वारा रसं व्याख्यायताऽनेन रसः काव्यशब्दार्थतो मनसि स्थापित इति रससम्प्रदायसंवर्धने महत्वपूर्णा भूमिका सम्पादिता।

आनन्दवर्धनस्य समकालिकः एकोऽन्य आचार्येऽस्ति यः खलु रुद्रभट्टनाम्ना ज्ञायते। अनेन शृङ्गारतिलकनामकस्य ग्रन्थविशेषस्य रचना कृता। ग्रन्थनामकरणेनैवास्य रसं प्रति पक्षपातः सुस्पष्ट एवास्ति। नवसंख्याकानां रसानाम्, भावादीनाम्, शृंगाररसप्रकरणे नायकनायिकाभेदादिकस्य किं वा विप्रलम्भशृंगारस्य सम्यक् निरूपणं कृतमस्ति। अन्येऽपि रसाः, सामान्येन प्रतिपादिताः सन्ति- इति रससम्प्रदायविकासे महत् साहाय्यं सम्पादितं रुद्रभट्टेन। रुद्रभट्टदृशा यथा चन्द्रमसं विना यामिन्याः, रमणं विना नार्याः, त्यागं विना लक्ष्म्याः शोभा न भवति तथैव रसं विना वाण्याः शोभा नैव भवति-

**यामिनीवेन्दुना मुक्ता नारीव रमणं विना।**
**लक्ष्मीरिव ऋते त्यागान्नो वाणी भाति नीरसा।।**[79]

रससिद्धान्तस्य सम्यग्विकासो तदा जातो यदा संस्कृतकाव्यशास्त्रे भट्टनायकस्योदयो जातः। अयं रसस्य प्रबलः समर्थक आसीदिति नास्ति विवादः। रससिद्धान्तेऽयं भुक्तिवादी आचार्योऽस्ति। रसनिष्पत्तिप्रस्तावेऽनेन नैकाः नवीनोद्भावनाः कृताः। या अद्यापि सिद्धान्तरूपेण प्रचलन्ति। यदि भट्टनायको न स्यात्तदाऽभिनवगुप्तमते तथा परिष्कृतिर्नायाता स्यात् इति तु सर्वं रसनिष्पत्तिप्रस्तावे विवेचयिष्यते।

भट्टनायको ब्रह्मानन्दापेक्षयापि काव्यरसमुत्कृष्टतरं मनुते। सहृदयरूपबालतृष्णाया वाग्धेनुः यद् दुग्धं रसं प्रवाहयति तेन तुल्यो योगिभिर्दुह्यमानो ब्रह्मरसोऽपि नास्ति।

**वाग्धेनुदुग्धमेतं हि रसं यद् बालतृष्णया।**
**तेन नास्य समः स स्याद् दुह्यते योगिभिर्हि यः।।**[80]

काव्ये रसचर्वणाया एव प्राधान्यमङ्गीकरोति भट्टनायकः। काव्ये रसयिता सर्वो न बोद्धा न नियोगभाक्। पुनश्च यथा-

काव्ये रसचर्वणा तावत् जीवितभूतेति भवतोऽपि अविवादोऽस्ति। (ध्वन्यालोक लोचनम् - पृ0 36) भरतसूत्रव्याख्यातृषु भट्टतोतस्यापि प्रमुखं स्थानमस्ति। अनेन

भरतसूत्रस्य सोज्जृम्भितं व्याख्यानमुपस्थापितम्। अस्य ग्रन्थोऽस्ति काव्यकौतुकम्, यस्य स्मरणमभिनवगुप्तेन ध्वन्यालोकलोचने, अभिनवभारत्याञ्चानेकेषु स्थानेषु कृतमस्ति। भट्टतोतेन शङ्कुकादीनां मतं खण्डयित्वा प्रशस्तरूपेण रससूत्रव्याख्यानमुपस्थापितम्। अस्य मतानुसारं काव्ये सन्निविष्टाः गुणालङ्कार-शब्द-शक्तिरीतिवृत्त्यादयः सर्वेऽपि रसाभिव्यञ्जनार्थमेव भवन्ति-

**लक्षणालङ्कृतिगुणाः दोषाः शब्दवृत्तयः।**
**वृत्तिसन्ध्यङ्गसंरम्भः संहारो यः कवेः किल॥**
**अन्योन्यस्यानुकूल्येन सम्भूयैव समुत्थितैः।**
**झटित्येव रसा यत्र व्यज्यन्ते ह्लादिभिर्गुणैः॥**
**वृत्तैः सरलबन्धैर्यन्मुग्धैश्चूर्णपदैरपि।**
**अश्लिष्टहृद्यघटनं भाषया सुप्रसिद्धया॥**
**यच्चेदृक्काव्यमात्रं सद्रसभावानुभावनम्।**
**सामान्याभिनये प्रोक्तं वाच्याभिनयसंज्ञया॥**
**एवं प्रकारं यत्किञ्चिद्वस्तुजातं कथार्पितम्।**
**अन्यूनाधिकसामग्री-पारितोषोन्मिषद्रसम्॥**[81]

रससम्प्रदायस्य प्रमुखाचार्याः सन्त्यभिनवगुप्ताः। अनेन स्वकीये ग्रन्थद्वये-ध्वन्यालोकलोचने (ध्वन्यालोकटीकायां) तथा अभिनवभारत्यां (नाट्यशास्त्रटीकायाम्) रसस्य प्राधान्यं प्रतिपादयता तत्स्वरूपं, रसनिष्पत्तिप्रकारः, रसस्यालौकिकत्वम्, ब्रह्मास्वादसहोदत्वञ्चेत्यादयः सविशदं प्रतिपादिताः सन्ति ध्वनिकारमतं स्फोटयता।

तेन रस एव वस्तुत आत्मा, वस्त्वलङ्कारध्वनी तु सर्वथा रसं प्रति पर्यवस्येते इति वाच्यादुत्कृष्टौ तु तावित्यभिप्रायेण ध्वनिः काव्यस्यात्मेति सामान्येनोक्तम्।[82] इत्युक्त्वा तथा च भामहकृतकाव्यप्रयोजनं स्फोटयता- यथोक्तम्-

**धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।**
**करोति कीर्तिं प्रीतिञ्च साधुकाव्यनिषेवणम्॥** इति।

तत्रापि तत्र प्रीतिरेव प्रधानम्। अन्यथा प्रभुसम्मितेभ्यो वेदादिभ्यो मित्रसम्मितेभ्यश्चे-तिहासादिभ्यो व्यत्पुत्तिहेतुभ्यः कोऽस्य काव्यरूपस्य व्युत्पत्तिहेतोर्जायासम्मितत्वलक्षणो विशेष इति प्राधान्येनानन्द एवोक्तः। चतुर्वर्गव्युत्पत्तिरपि आनन्द एव पार्यन्तिकं मुख्यं फलम्।[83] इत्युक्त्वा रसस्यैव प्राधान्यं सर्वथा प्रतिपादितमभिनवगुप्तेन। शैववादिनाऽनेन स्थाने शिवतत्त्वरसवत्त्वयोः तादात्म्यं प्रतिपादितम्-

**संसारनाट्यजननधातुपरिजलताजुषाम्।**
**जलमूर्तिं शिवां पत्युः सरसां पर्युपास्महे॥**

ध्वन्यालोकलोचने मङ्गलमुपस्थापयताऽनेन सरस्वतीरसतत्त्वयोरपि तादात्म्यमेव निरूपितम्-

जगद्ग्रावप्रख्यं निजरसभरात्सारयति च इति। संस्कृतकाव्यशास्त्रस्य बीजभूतमग्निपुराणमेव काव्यस्य रसवत्तायाः समुद्घोषं करोति-

**अपारे काव्यसंसारे कविरेकः प्रजापतिः।**
**यथास्मै रोचते विश्वं तथेदं परिवर्तते।।**
**शृङ्गारी चेत्कविः सर्वं काव्यं रसमयं जगत्।**
**स एव वीतरागश्चेन्नीरसं सर्वमेव तत्।।**[84]

अभिनवगुप्तानन्तरं साङ्गोपाङ्गतया प्रतिष्ठापिते काव्यशास्त्रजगति रससम्प्रदाये राजशेखर-भोजराज-मम्मटभट्ट-विश्वनाथ- जगन्नाथादिभिः सर्वैरेव काव्ये रसस्यैव प्राधान्यमङ्गीकृतम्।

राजेशखरस्तु काव्यमीमांसायां काव्यपुरुषवर्णने शब्दार्थयोस्तच्छरीरत्वम्, गुणादीनां शौर्यादिकत्वम्, अलङ्कारादीनां कटककुण्डलादिकत्वम्, दोषाणां काणत्वादिकत्वञ्च प्रतिपादितवान्-

शब्दार्थौ ते शरीरम्, रसादिश्चात्मा, गुणाः शौर्यादिवत्, रीतयोऽवयवसंस्थानविशेषवत्, अलङ्काराः कटककुण्डलादिवत्, दोषाः काणत्वादिवत्[85] इति। स काव्ये रसविरुद्धं किमपि न वाञ्छति-

**मज्जनपुष्पावचयनसन्ध्याचन्द्रोदयादिवाक्यमिह।**
**सरसमपि नातिबहुलं प्रकृतरसानन्वितं रचयेत्।।**

नगनगरग्रामसरित्प्रकृतिजलक्रीडादीनां वर्णनं मानवभावनास्पर्शेनैव रसवद्भवतीति सुस्पष्टं प्रतिपादयता नदीवदनीरसवत्तायाः सरसं चित्रणं कृतमस्ति-

**एतां विलोकय तलोदरि ताम्रपर्णी-**
**मम्भोनिधौ विवृतशुक्तिपुरोद्धृतानि।**
**यस्याः पयांसि परिणाहिषु हारमूर्त्या**
**वामभ्रुवां परिणमन्ति पयोधरेषु।।**

भोजराजस्तु काव्यस्य रसवत्त्वं प्रतिपाद्यैकरसवादपरम्परां पालितवान्। अनेन शृंगार एवैकः प्रधानो रसः, अन्ये च तस्यैव भेदा इति निरूपितं यदत्र विशदं प्रकाशयिष्यते एकरसवादनिरूपणप्रस्तावे।

एवं यदा रसधारा निरवच्छिन्ना प्रवहमानाऽऽसीत्तदैव द्वयोः नवीनयोः सम्प्रदाययो रुदयो जातः। तत्रैकः वक्रोक्तिसम्प्रदायः अपरश्च औचित्यसम्प्रदायः इति कथ्यते। वक्रोक्तिसम्प्रदायस्य प्रवर्तक आचार्योऽस्ति कुन्तकः, औचित्यसम्प्रदायस्य च क्षेमेन्द्रः। आचार्येण कुन्तकेन तु-

**वक्रोक्तिः काव्यजीवितम् -**

इत्युक्त्वा वक्रोक्तेरेव काव्यं प्राधान्यं तथा च औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्[87] इत्युक्त्वा क्षेमेन्द्रेण औचित्यस्य काव्ये प्राधान्यं प्रतिपादितम्। किन्त्वाभ्यामपि रससम्प्रदायस्य काचिद्धानिर्नैव कृता। यद्यपि कुन्तकस्य मते वक्रोक्तिरलङ्काररूपैवास्ति-

**सालङ्कारस्य काव्यता**

इति चास्ति तस्योद्घोषः। अनेन स वक्रोक्तेः काव्यजीवितत्वं प्रतिपादयन्नपि अलङ्कारसम्प्रदायं परिचुम्बति तथापि रसेन सह तद्विरोधो नास्तीति सुस्पष्टएवास्ति-

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।[88]**

इति तत्कृतकाव्यलक्षणे बन्धपदस्य विशेषणरूपेण यद्- तद्विदाह्लादकारिणि इति प्रतिपादितं तत्र आह्लादपदेन रसःसङ्केतितोऽस्तीति निर्विवादसिद्धम्। किञ्च काव्यामृतरसस्य चतुर्वगफलास्वादादपि विशिष्टतरत्वं प्रतिपादयता-

**चतुवर्गफलास्वादमप्यतिक्रम्य तद्विदाम्।**
**काव्यामृतरसेनान्तश्चमत्कारो वितन्यते।।[89]**

काव्यचमत्कारितत्वेषु रसस्य प्राधान्यं सिद्धान्तितमेव। ध्वनिकारवत्सोऽप्यप्रत्यक्षतया काव्यस्योपनिषद्रूपेण रसमेव भूयो भूयः प्रतिपादयति-

**निरन्तररसोद्गारगर्भसन्दर्भनिर्भराः।**

गिरः कविनां जीवन्ति न कथामात्रमाश्रिताः।[90] इति ध्वनिकारस्य-नहि कवेरितिवृत्तमात्र-निर्वाहिणात्मपदलाभः इत्यस्यानुवादमात्रमेवास्ति। एवं वक्रोक्तिसम्प्रदायसंस्थापकस्यापि कुन्तकस्य रसं प्रति वैमुख्यं नास्ति।

क्षेमेन्द्रस्तु रससिद्धस्य काव्यस्य जीवितत्वेनौचित्यं प्रतिपादयन् रससम्प्रदाय-सरणिमेवानुससार। धनिकधनञ्जयादिभिरपि दशरूपकादिदिशा नाट्यशास्त्रं व्याख्यायद्भिः भरतमतमनुसृत्य रससम्प्रदाय एव पोषितः।

चतुदर्शशताब्द्यां जातेन विश्वनाथ-कविराजेन तु **वाक्यं रसात्मकं काव्यम्**[91] इति काव्यलक्षणं विधाय रसात्मकस्यैव वाक्यस्य काव्यत्वमङ्गीकुर्वता रससम्प्रदायस्य पताकैवोद्धृता। यत् ध्वनिवादिना यद्वा व्यञ्जनावादिना आचार्येण पण्डितराजजगन्नाथेनापि नैव खण्डितमिति रससम्प्रदायधारा भरततोऽ द्यावधि निरन्तरं प्रवहति संस्कृतकाव्यशास्त्रे।

**विद्याभूषणः**

विद्याभूषणस्तु मम्मटानुसारं व्यञ्जनावादी प्रतीयते। यद्यपि विश्वनाथवत् तेन रसस्य काव्यात्मत्वेन प्रतिपादनं न कृतम्, तथापि उत्तमकाव्यस्य (ध्वनिकाव्यस्य)

निरूपणावसरे ध्वनिभेदप्रस्तावे असंलक्ष्यक्रमव्यङ्ग्यं प्रदर्शयता तेन रसस्वरूपम्, तन्निष्पत्तिप्रकारः, रसभेदाः तेषां साङ्गोपाङ्गमुदाहरणं च प्रदर्शयता रसमहत्वं काव्यशिखरारूढं कृतमिति दरीदृश्यते। पूर्वम् अष्टौ नाट्ये रसाः स्मृताः इत्युक्त्वा शान्तोऽपि नवमो रसः इति च प्रतिपाद्य दास्य-सख्य- वात्सल्यानामपि रसत्वं प्रतिपाद्य काव्यप्रकाशात् किञ्चिन्नूतनत्वमपि प्रतिपादितमिति रससम्प्रदाये विद्याभूषणस्यापि महन्महत्त्वमस्ति।

## गुणीभूतव्यङ्ग्यविवेचनम्

यस्मिन् काव्ये व्यङ्ग्योऽर्थः स्फुटः किन्तु अप्रधानो भवति तत् काव्यं गुणीभूतव्यङ्ग्यमिति। व्यङ्ग्यार्थस्याप्राधान्यमेव वाच्यार्थस्य प्राधान्यं गमयति। अर्थाद् यत्र वाच्य एवार्थः प्रधानः व्यङ्ग्यार्थश्चाप्रधान इति सर्वं सङ्कलय्योक्तम्-

**अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्।।**[92]

वाच्यार्थव्यङ्ग्यार्थयोः प्राधान्याप्राधान्यं तु चमत्कारनिष्ठमिति यत्र वाच्यार्थनिष्ठोऽधिकश्चमत्कारस्तत्तु वाच्यार्थस्य प्राधान्यात् व्यङ्ग्यार्थास्य च गुणीभावात् गुणीभूतव्यङ्ग्य नाम द्वितीयकोटिकं काव्यमिति। यत्र तु वाच्यार्थपेक्षया व्यङ्ग्यार्थनिष्ठं चमत्काराधिक्यं भवति तत्तु ध्वनिनामकमुत्तमं काव्यं पूर्वं प्रतिपादितमिति।

ननु व्यङ्ग्यार्थ एव सहृदयग्राह्यो भवति, काव्ये व्यङ्ग्यार्थप्रतिपादनाय वाच्यार्थस्य तथैवोपयोगो यथा आलोकाय दीपस्येति-

**आलोकार्थी यथा दीपशिखायां यत्नवान् जनः।**
**तदुपायतया तद्वद् वाच्येऽर्थे तदादृतः।।**[93]

इति व्यङ्ग्यार्थस्यैव काव्यत्वे सिद्धे कथं वाच्यार्थनिष्ठचमत्काराधिक्यमादाय गुणीभूतव्यङ्ग्यता? इति चेन्न, सत्यपि व्यङ्ग्यार्थस्य सहृदयहृदयाह्लादकत्वे वाच्यार्थनिष्ठकाव्यता नैवापलापार्हा ध्वनिकारेण-

**योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः।**
**वाच्यप्रतीयमानाख्यौः तस्य भेदावुभौ स्मृतौ।।**[94]

इत्यत्र सहृदयश्लाघ्यत्वं काव्यत्वनियामकमिति मत्वा यत्र यत्र सहृदयश्लाघ्यत्वं तत्र तत्र काव्यत्वमिति व्याप्तौ वाच्यार्थोऽपि काव्यम्, सहृदयश्लाघ्यत्वात् इति नियमस्य सत्यत्वे वाच्यार्थनिष्ठकाव्यतायां न कापि क्षतिः। किञ्च शब्दार्थौ काव्यम् इति काव्यलक्षणे अर्थसामान्यस्यैव काव्यत्वमङ्गीकारात्। एवञ्च वाच्यार्थस्यापि काव्यत्वे सिद्धे वाच्यार्थस्यैवाधिकचमत्कारप्रतिपादकत्वे गुणीभूतव्यङ्ग्यत्वमिति। वाच्यार्थपेक्षया व्यङ्ग्यार्थस्य न्यूनचमत्कारत्वं दुर्दैववशाद् दास्यमनुभवद्राजकलत्रमिव सिद्धम्। यथोक्तं पण्डितराजेन- अत्र जानकीकुशलावेदनेन राघवः शिशिरीकृत इति व्यङ्ग्यम्. गुणभूतमपि, दुर्दैववशतो दास्यमनुभवद्राजकलत्रमिव कामपि कमनीयतामावहति।[95]

## गुणीभूतव्यङ्ग्यभेदाः

साहित्यकौमुदीकारेण श्रीविद्याभूषणेन भरतकारिकानुसारमष्टौ गुणीभूतव्यङ्ग्यभेदाः निरूपिताः सन्ति- 1- अगूढव्यङ्ग्यम्, 2- अपराङ्गव्यङ्ग्यम्,3- वाच्यसिद्ध्यङ्गम्, 4- अस्फुटव्यङ्ग्यम्, 5- सन्दिग्धप्राधान्यम्, 6- तुल्यप्राधान्यम्, 7- काक्वाक्षिप्तम्, 8- असुन्दरव्यङ्ग्यम् इति-

**अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम्।**
**सन्दिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम्।।**
**व्यङ्ग्यमेव गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः।।**[९६]

इयं कारिका काव्यप्रकाशेऽपि यथावद् दृश्यते किन्तु अपराङ्गव्यङ्ग्यस्य व्याख्या काव्यप्रकाशे एवमस्ति- अपरस्य रसादेः वाच्यस्य वा (वाक्यार्थी भूतस्य) अङ्गं रसादिरनुरणनरूपो वा[९७]।

साहित्यकौमुदीकारस्तु केवलं रसादीनां रसाङ्गत्व एव गुणीभूतत्वमङ्गीकरोति न तु अनुरणनरूपव्यङ्ग्यार्थस्य वाच्याङ्गतायाम्। यथा-

अपरस्य रसादेरङ्गं रसादिः। अयमेव रसवत्प्रभृत्यलङ्कारः। तत्र रसादेः रसाङ्गत्वे रसवत्, भावाङ्गत्वे प्रेयः, आभासाङ्गत्वे ओजस्वि, प्रशमाङ्गत्वे तु समाहितम्।[९८]

एतेषु अष्टविधेषु गुणीभूतव्यङ्ग्येषु संदिग्धप्राधान्यतुल्यप्राधान्ययोस्तु वाच्यार्थव्यङ्ग्यार्थयोः समानश्चमत्कारः अन्यत्र तु वाच्यार्थपेक्षया न्यूनश्चमत्कार इति। अगूढव्यङ्ग्ये तु अतिझटितिप्रतीतिविषयत्वात् वाच्यायमानत्वमिति।

## अवरकाव्यविवेचनम्

यत्र व्यङ्ग्योऽर्थः, स्फुट एव न भवति किञ्च व्यङ्ग्यार्थे कविसंरम्भगोचरता न भवति, केवलं शब्दालङ्कारे वा अर्थालङ्कारे वा कवेस्तात्पर्यं भवति, तत् काव्यमवरम्, अधमं चित्रकाव्यमित्युच्यते-

**शब्दचित्रं वाच्यचित्रमव्यङ्ग्यमवरं स्मृतम्।**[९९]

यद्यपि ध्वनिकारेण साहित्यदर्पणकारेण च चित्रकाव्यस्य काव्यत्वमेव नाङ्गीकृतं तथापि भेदोऽयमनुभवे सङ्घटते यतो हि व्यङ्ग्यार्थस्य प्राधान्ये एकं काव्यम् (उत्तमम्) अङ्गीकृतमस्ति, तदप्राधान्ये द्वितीयं गुणीभूतव्यङ्ग्यमिति। व्यङ्ग्यार्थस्याप्राधान्यमेव वाच्यार्थस्य प्राधान्यमस्ति। यथा व्यङ्ग्यार्थस्य प्राधान्ये, वाच्यार्थस्य प्राधान्ये काव्यत्वमङ्गीकृतमस्ति तथैव शब्दस्य प्राधान्येऽपि काव्यत्वमनुभवपदमायाति। अतएव पण्डितराजेन काव्यस्य भेदचतुष्टयं कृत्वा अधमकाव्यत्वं तत्रैव प्रतिपादितं यत्र शब्दस्य प्राधान्यं भवति-

**यत्रार्थचमत्कृत्युपस्कृता शब्दचमत्कृतिः प्रधानं तदधमं चतुर्थम्।**[१००]

किन्तु पण्डितराजेनाभिमतं शब्दप्राधान्ये एवाधमकाव्यत्वं काव्यप्रकाशकारस्य साहित्यकौमुदीकारस्य वा विद्याभूषणस्याभिमतं नास्ति, अपि तु एतौ द्वावप्याचार्यौ

व्यञ्जनावादिनौ स्तः, अतएवाभ्यां काव्यत्वं तत्रैव स्वीक्रियते यत्र व्यङ्ग्यस्य कथमपि संस्पर्शो भवत्येव। यत्र व्यङ्ग्यसंस्पर्शो न भवति तत्र काव्यत्वमेव न भवतीति व्यङ्ग्यमुखेनैवाधमकाव्यमपि लक्षितमस्ति काव्यप्रकाशे साहित्यकौमुद्याञ्च-

**शब्दचित्रं वाच्यचित्रमव्यङ्ग्यमवरं स्मृतम्।**

इति। अत्र शब्द चित्रे भवतु नाम शब्दस्य प्राधान्यम्, किन्तु अर्थचित्रे कथं शब्दप्राधान्यम्? तत्र स्वच्छन्दोच्छलदच्छ इत्यादिवत् शब्दाडम्बरस्याभावात्। तत्रार्थस्यैव चमत्कारजनकत्वात्। यथा-

**कदम्बमालाकलिता कं सहर्षं न कुर्वती।**
**कृष्णमूर्तिरिवाभाति कालिन्दीकाननस्थली।।**

इत्यत्र कालिन्दीकाननस्थल्याः कृष्णमूर्तित्वेन तुलनादुपमाऽलङ्कारश्चमत्कारजनक इति न तत्रार्थचमत्कृत्युपस्कृतशब्दचमत्कृतेः प्राधान्यम्। अतएव सन्नपि व्यङ्ग्यार्थो यत्र न स्फुटस्तथा च शब्दे वा वाच्यार्थे वा चमत्कारः (प्राधान्यं) तत्रावरं नामाधमं चित्रकाव्यमिति सिद्धम्।

ध्वनिकारेण चित्रकाव्यत्वं खण्डयता किमिदं चित्रमिति? प्रश्नमुत्थाप्य सर्वस्यापि वस्तुनोऽन्ततो विभावत्वेन रसस्य वा भावस्य वाङ्गत्वं प्रतिपादितम्, सिद्धान्तितं च चित्रकाव्यत्वं यत्र रसभावादिविषयविवक्षाविरहे सति अलङ्कारनिबन्धनत्वमिति। यथोक्तम्-

**रसभावादिविषयविवक्षाविरहे सति।**
**अलङ्कारनिबन्धो यः स चित्रविषयो मतः।।**
**रसादिषु विवक्षा तु स्यात्तात्पर्यवती यदा।**
**तदा नास्त्येव तत्काव्यं ध्वनेर्यत्र न गोचरः।।**[101]

ननु पूर्वं प्रथमे परिच्छेदे सामान्येन चित्रकाव्यस्य परिचयमुपस्थापयता चित्रकाव्यस्य शब्दचित्रं वाच्यचित्रमिति भेदद्वयं कृत्वा तयोरुदाहरणमप्युपस्थापितमस्ति साहित्यकौमुद्याम्, पुनः षष्ठपरिच्छेदे चित्रकाव्यस्य विवेचनस्य का आवश्यकतेति प्रश्नस्य जिज्ञासायां साहित्यकौमुदीकारेण श्रीविद्याभूषणेनोक्तम्-

**शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम्।**
**गुणप्राधान्यतस्तत्र स्थितिः शब्दार्थचित्रयोः।।**

अर्थात् यत्र शब्दचित्रं तत्रार्थचित्रताया अप्राधान्यम्, यत्र तु अर्थचित्रं प्रधानं तत्र शब्दचित्रं गौणं भवतीति।

पण्डितराजजगन्नाथस्तु शब्दचित्रतायाम्, अर्थचित्रतायां चमत्कारतारतम्यं स्वीकृत्य तत्र पृथक् पृथक् काव्यभेदत्वमङ्गीकरोति-

तत्रार्थचित्र- शब्दचित्रयोरविशेषेणाधमत्वमयुक्तं वक्तुस्तारतम्यस्य स्फुटमुपलब्धेः। को ह्येवं सहृदयः सन् विनिर्गतं मानदमात्ममन्दिरात्, स च्छिन्नमूलः क्षतजेन रेणुः

इत्यादिभिः काव्यैः स्वच्छन्दोच्छलद् इत्यादीनां परमरश्लाघ्यानामविशेषं ब्रूयात्। सत्यपि तारतम्ये यद्येकभेदत्वं कस्तर्हि ध्वनिगुणीभूतव्यङ्गयोरीषदन्तरयोर्विभिन्नभेदत्वे दुराग्रहः।[63]

एवं शब्दचित्रवाच्यचित्रयोः सत्यपि तारतम्ये चित्रत्वमस्फुटव्यङ्ग्यत्वञ्चादायैकस्मिन्नेव भेदे द्वयोः ग्रहणं साहित्यकौमुद्यां कृतमिति न कश्चिद्दोषः।

## सन्दर्भ-सूची

1. नाट्यशास्त्रम्- 32-385
   साहित्यदर्पणः- 6-1.
2. मन्दारमरन्दः - पृ0- 180.
3. साहित्यदर्पणः 6-3.
4. साहित्यदर्पणः- 6/4-6.
5. काव्यानुशासनम्- 8/3.
6. काव्यानुशासनम् - 8/4.
7. सरस्वतीकण्ठाभरणम् - 2/140.
8. साहित्यरदर्पणः- 6/336.
9. साहित्यपदर्पणः - 6/314-15.
10. साहित्यदर्पणः 6/329.
11. साहित्यदर्पणः परि0 - 6
12. द्रष्टव्यम्, आनन्दवर्धन,
    डॉ. रेवा प्रसाद द्विवेदी, पृ0 118.
13. काव्यप्रकाशः - 1।3.
14. काव्यप्रकाशः - 1।4.
15. काव्यप्रकाशः - 1।5.
16. रसगंगाधरः, आ0-1.
17. धन्यालोकः
18. साहि़त्यदर्पणः - परि0 4, पृ0 155.
19. काव्यप्रकाशः - 1
    साहित्यकौमुदी- 1.
20. साहित्यकौमुदी- परि0- 4.
21. साहित्यकौमुदी- 3/7.
22. साहित्यकौमुदी- 2/10 इत्यादिभिः सिद्धम्.
23. साहित्यकौमुदी- परि0- 4.
24. साहित्यकौमुदी- परि0- 4.
25. साहित्यदर्पणः - 1.
26. अग्निपुराणम्.
27. नैषद्यम् - 1/3.
28. अग्नि0पु0- 339(10-11).

29. का0प्र0 4/5.
30. साहित्यकौमुदी- 4/4-5.
31. अभिनवभारती, पृ0 429.
32. प्रथमानने, पृ0 132.
33. नाट्यशास्त्रम्- 6/40-46.
34. नाट्यशास्त्रम्- 7/6.
35. काव्यालंकारसंग्रहः 4/4.
36. काव्यालङ्कारः - 12/3.
37. तत्रैव 12/4.
38. दशरूपकम्- 4/35.
39. दशरूपकम्- 4/83.
40. अभिनवभारती- पृ0 640.
41. अभिनवभारती- पृ0 641.
42. स0क0 5/164.
43. राघवनकृतम्- दि नम्वर आफ रसाज, पृ0 124.
44. नाट्यदर्पणः, पृ0 306.
45. साहित्यदर्पणः 3/251.
46. रसतरङ्गिणी- पृ0 160.
47. रसतरङ्गिणी- पृ0 160.
48. रसतरङ्गिणी- पृ0 161.
49. परि0- 4.
50. साहित्यकौमुदी, परि0-4.
51. साहित्यकौमुदी, परि0-4.
52. रसगङ्गाधरः - आ0 1.
53. अभिनवभारती- पृ0 635.
54. ना0शा0- 6/84.
55. अभिनवभारती- पृ0 623.
56. अभिनवभारती- अध्यायः - 6.
57. काव्यमीमांसा, अ0 1 शास्त्रसंग्रहः पृ0 5-6.
58. वा0रा0वा0का0.
59. रघुवंशमहाकाव्यम्-14-70.
60. ध्व0 1/5.
61. लोचने, ध्व0 प्र0उ0पृ0 86.
62. अभिनवभारती- पृ0 428.
63. काव्यालङ्कारः 1/13.
64. काव्यादर्शः - 1/51-64.
65. काव्यालङ्कारः 12/1-2.

66. तत्रैव- 1/4.
67. तत्रैव- 16/1.
68. तत्रैव- 15/21.
69. का0सू0वृ0.
70. का0सू0वृ0- 3/2/15.
71. ध्व0- 1/1.
72. ध्व0- 1/5.
73. ध्व0- 4/5.
74. ध्व0- 2/6.
75. ध्व0- 2/18-19.
76. ध्व0- 3/6.
77. ध्व0उ0- 3.
78. काव्यमीमांसा.
79. शृ0ति0- 1/6.
80. ध्व0 लोचन- पृ0- 12.
81. अभिनवभारती- पृ0 94.
82. ध्वन्यालोकलोचनम् पृ0 85.
83. तत्रैव पृ0 40-41.
84. अग्निपु0- 336.
85. का0मी0 अ0-3.
86. वक्रोक्ति.
87. औचित्यविचारचर्चा.
88. वक्रोक्ति- 1/10.
89. तत्रैव 1/5.
90. तत्रैव 4/11.
91. साहित्यदर्पणः 1/1.
92. साहित्यकौमुदी- परि0-1.
93. ध्वन्यालोकः-1.
94. ध्वन्यालोकः -1.
95. रसगङ्गाधरः -आ0-1.
96. साहित्यकौमुदी- 5/1-2.
97. काव्यप्रकाशः उ05.
98. साहित्यकौमुदी- परि0 5.
99. साहित्यकौमुदी- परि0-1.
100. रसगङ्गाधरः, आ01, पृ0 74.
101. ध्वन्यालोकः - उ0- 3, पृ0 528.
102. रसगङ्गाधरः -आ0-1, पृ0- 182.

# चतुर्थोऽध्यायः

# दोष-विवेचनम्

## दोषनिरूपणम्

दुष् वैकृत्ये इत्यस्माद्धातोः दुष्यते विकृतिं नीयतेऽनेनेति व्युत्पत्तौ करणे घञ्-प्रत्ययेन दोषशब्दसिद्धिः। दोषपदेनात्र काव्यदोषाः निरूपणीयाः सन्ति। काव्यस्वरूपे शब्दार्थयोः विशेषणेषु अदोषाविति प्रथमं विशेषणमस्ति। काव्यस्वरूप-भेदादिनिरूपणे सिद्धे दोषनिरूपणस्य प्रकरणप्राप्ततया सम्प्रति काव्यदोषाः निरूप्यन्ते। दोषोऽपि स्वरूपनिरूपणात्मकमेकमावश्यकं तत्त्वमस्ति। यतो हि स्वरूपं क्वचिद् दोषमुखेन, दोषाभावमुखेन, गुणप्रतिपादनात्मना वा प्रतिपाद्यते। अत्र साहित्यकौमुद्यामाअदोषौ इति शब्दार्थयोः विशेषणेन दोषाभावमुखेन काव्यस्वरूपं प्रतिपादितमस्ति। दोषाभावज्ञानार्थं दोषज्ञानमावश्यकमस्ति, दोषज्ञानं विना दोषाभावज्ञानस्यासम्भवात्।

काव्यालोचनपरायणाः त एव सफला आलोचका भवन्ति ये कविनिर्मितकाव्यानां गुणानां विवेचनां कुर्वन्तु तथैव तत्रस्थदोषाणामपीति, यथा कविरपि स्वन्यूनतां जानातु पुनश्च तान् दोषान् हृदि निधाय निर्दुष्टस्य काव्यस्य निर्माणं करोतु। यदि दोषोद्घाटनं न स्यात्तदा कस्यापि वस्तुनः परिमार्जनं संस्करणं वा न स्यादिति दोषविवेचनं सर्वथा ऽवश्यकमिति मत्वा साहित्यकौमुदीकारेण श्रीविद्याभूषणेनापि सप्तमे परिच्छेदे काव्यदोषाः सन्ति निरूपिताः।

दुष्यते विकृतिं नीयतेऽनेनेति दोषः इति व्युत्पत्तौ विकृतिरेव दोष इति सिद्ध्यति। विकृतिश्चात्रापकर्षरूपेति। अतएव-

**.................. दोषास्तस्यापकर्षकाः**

**रसापकर्षका दोषाः ....................।**

इति पूर्वं प्रथमपरिच्छेदे पुनश्च सप्तमपरिच्छेदे साहित्यदर्पणे श्रीविश्वनाथेनोक्तम्। आचार्येण मम्मटेन पुनः साहित्यकौमुदीकारेण विकृतिः हतिपदेन प्रकटिताऽस्ति-

**मुख्यार्थहतिर्दोषः ..............।**[1]

अत्र हतिः हननं (विनाशः) नास्ति, अपितु अपकर्ष एव। यथोक्तं वृत्तौ-

**हतिरपकर्षः**[2]

एवञ्च मुख्यार्थापकर्षकत्वं दोषत्वम् इति दोषसामान्यलक्षणम्।

ननु कोऽयं मुख्यार्थः? यस्यापकर्षको दोष इत्युच्यते, इति चेत्तदा मुख्यार्थस्य सुस्पष्टबोधार्थम्-

1- रसः मुख्यः।

2- रसाश्रयाद् वाच्यः मुख्यः।

3- रसवाच्ययोः उपयोगित्वात् शब्दाद्या अपि मुख्याः।

एवं सामान्येन कृतायां विवेचनायाम्-

1- रसापकर्षको दोषः (रसापकर्षकारणमिति)।

2- चमत्कारिवाच्यापकर्षको दोषः।

3- शब्दाद्यपकारको दोषः।

इति त्रिविधं दोषस्वरूपमत्र विवक्षितमस्ति। यद्यपि मुख्यार्थबाधे तद्योगे इति लक्षणाप्रसङ्गे उक्तायां कारिकायां मुख्यार्थपदेन वाच्यार्थ एव गृहीतोऽस्ति, किन्तु दोषप्रकरणे उक्तस्य मुख्यार्थपदस्य न केवलं वाच्यार्थे एव तात्पर्यमिति अपि तु रस एवात्र मुख्योऽर्थः। रसस्य काव्यत्वेन प्रतिपादनात्-

**वाक्यं रसात्मकं काव्यम्**[3]

यतो हि यथा उत्कर्षकारकाः अलङ्काराः साक्षात् शब्दमर्थं चोपकुर्वन्तः परम्परया रसमप्युपकुर्वन्ति तथैव दोषाः अपि शब्दार्थादिकं दूषयन्तः काव्यात्मानं रसं दूषयन्ति। यथा लोके अहं सुन्दरः अहं दुष्टः इति प्रतीतिः आत्मन्येव भवति तथैव काव्येऽपि उत्कर्षापकर्षौ आत्मन्येव जायेते। अतः रसोपकारकाः गुणालङ्कारादयः, रसापकर्षकाश्च दोषा इति कथ्यन्ते-

**वाक्यं रसात्मकं काव्यं दोषास्तस्यापकर्षकाः।**
**उत्कर्षहेतवः प्रोक्ताः गुणालङ्काररीतयः॥**

इति साहित्यदर्पणे उक्तम्। रसात्मना दोषादीनां व्यवस्थापनादेव नित्यदोषाऽनित्यदोषादिव्यवस्था जायते। इति सर्वं साहित्यदर्पणे सुस्पष्टम्।

रसापकर्षका दोषाः इति दोषलक्षणे अपकर्षस्तु क्वचिद् अप्रतीतिरूपः, क्वचिद् विलम्बेन प्रतीतिरूपः, क्वचिच्च प्रतीयमानस्यापकर्ष इति। तत्र रसस्याप्रतीतिर्यथा- असमर्थच्युतसंस्कृत्यादौ, विलम्बेन प्रतीतिर्यथा- निहतार्थक्लिष्टत्वादौ, न्यूनप्रतीतिरूपापकर्षो यथा- निरर्थकत्वादौ।

## दोषभेदाः

शब्दार्थशरीरमयत्वमेव काव्यलक्षणमिति शब्दार्थद्वारैव काव्यस्यात्मा रसोऽपकृष्यते, उपस्क्रियते वा। सर्वमिदं गुणालङ्कारदोषनिरूपणं लोकमाश्रित्यैव कल्पितमिति। यथा लोके केचन दोषाः काणत्वखञ्जत्वादयस्तत्तदङ्गापकर्षपूर्वकमङ्गिनः आत्मनोऽपकर्ष-

मुपस्थापयन्ति तथैव ये खलु शब्दार्थदोषाः सन्ति ते शब्दार्थापकर्षद्वारैवात्मानं रसमपकर्षन्ति। किन्तु लोके केचन कार्पण्यादयः भीरुत्वादयश्च साक्षादात्मधर्मास्तथैव काव्येऽपि स्वशब्दवाच्यत्वादयः साक्षादात्मदोषा इति साक्षादेव रसमपकर्षयन्ति।

एवञ्च सामान्येन पूर्वं दोषाः द्विविधाः साक्षाद् दोषाः, परम्परया दोषाश्चेति। द्वितीयोऽपि द्विविधः- शब्ददोषः, अर्थदोषश्चेति। शब्दोऽपि त्रिविधः- 1- पदरूपः, 2- पदार्थशरूपः, 3- वाक्यरूपश्चेति। यथोक्तं वामन्याम्-

शब्दस्तु त्रिधा- पदं तदेकदेशो वाक्यं च। एवं च तदाश्रितः शब्ददोषोऽपि त्रिविधः[4]........। एवं सङ्कलेन दोषाः पञ्चविधाः

1-पददोषाः 2- पदांशदोषाः 3- वाक्यदोषाः 4- अर्थदोषाः इति। यथोक्तं दर्पणे-

**.......................................ते पुनः पञ्चधा मताः।**
**पदे तदंशे वाक्येऽर्थे सम्भवन्ति रसेऽपि यत्।।[5]**

काव्यप्रकाशेऽपि-

**मुख्यार्थहतिर्दोषः रसश्च मुख्यस्तदाश्रयाद्वाच्यः।**
**उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः।।**

इत्यत्र शब्दाद्याः इत्याद्यग्रहणाद्वर्णरचने इत्युक्त्वा दोषाणां शब्दवर्णरचनार्थरसगतत्वं प्रतिपादितमिति निश्चितम्। शब्ददोषस्तु पदरूप- रचनादोष-वाक्यरूप इति तद्विवेचनेन ज्ञायते।

साहित्यकौमुदीकारोऽपि- हतिरपकर्षः स्थगनमिति यावत्। रसस्तदास्वादः। रसाश्रयाद्वाच्योऽपि मुख्यः उभयो रसवाच्ययोः। आद्यपदाद् वर्ण-रचने। स दोषः पदतदंशवाक्यार्थरसेषु सम्भवात्पञ्चविद्यो बोध्यः।[6] इत्युक्त्वा सुस्पष्टमेव पञ्चविधाः दोषा इति स्वीकरोति।

**1- पददोषाः-** साहित्यकौमुदीकारेण श्रीविद्याभूषणेन पददोषाः असमासगताः समासगताश्च द्वेधा प्रतिपादिताः सन्ति। तत्रासमासगतेषु पददोशेषु श्रुतिकटु 2- च्युतसंस्कृति 3- अप्रयुक्तम्, 4- असमर्थम्, 5- निहतार्थम्, 6- अनुचितार्थम्, 7- निरर्थकम्, 8- अवाचकम्, 9- अश्लीलम्, 10- सन्दिग्धम्, 11- अप्रतीतम्, 12- ग्राम्यम्, 13- नेयार्थम्, 14- क्लिष्टम्, 15- अविमृष्टविधेयांशम्, 16- विरुद्धमतिकृत् पदमिति षोडशदोषाः परिगणिताः सन्ति। समासगतेषु च पददोषेषु क्लिष्टम्, अविमृष्टविधेयांशम्, विरुद्धमतिकृत् इति त्रयो दोषाः सन्ति निरूपिताः।

**2- पदांशदोषाः-** श्रुतिकटु, निहतार्थम्, निरर्थकम्, अश्लीलम्, नेयार्थम्,

असमर्थम्, अप्रयुक्तम्, अप्रतीतम्, इत्यादयः सन्ति पदांशदोषाः।

**3- वाक्यदोषाः-** वाक्यदोषास्तु केचन ते सन्ति ये पदपदांशदोषयोरपि परिगणिताः सन्ति यथा- 1- श्रुतिकटुत्वम्, 2- अप्रयुक्तत्वम्, 3- निहतार्थत्वम्, 4- अनुचितार्थत्वम्, 5- अवाचकत्वम्, 6- अश्लीलत्वम्, 7- सन्दिग्धत्वम्, 8- अप्रतीतत्वम्, 9- ग्राम्यत्वम्, 10- नेयार्थत्वम्, 11- क्लिष्टत्वम्, 12- अविमृष्टविधेयांशत्वम्, 13- विरुद्धमतिकृत्त्वञ्चेति।

केचन तु केवलं वाक्यदोषा एव सन्ति। यथा- 1- प्रतिकूलवर्णम्, 2- उपहतविसर्गम्, 3- लुप्तविसर्गम्, 4- विसन्धि, 5- हतवृत्तम्, 6- न्यूनपदम्, 7- अधिकपदम्, 8- कथितपदम्, 9- पतत्प्रकर्षम्, 10- समाप्तपुनरात्तम्, 11- अर्धान्तरैकवाचकम्, 12- अभवन्मतयोगम्, 13- अनभिहितवाच्यम्, 14- अपदस्थपदम्, 15- अपदस्थसमासम्, 16- सङ्कीर्णम्, 17- गर्भीतम्, 18- प्रसिद्धिहतम्, 19- भग्नप्रक्रमम्, 20- अक्रमम्, 21- अमतपदार्थम् इति सङ्कलनेन चतुस्त्रिंशद् वाक्यदोषाः सन्ति।

**4- अर्थदोषाः-** 1- अपुष्टः, 2- कष्टः, 3- व्याहतः, 4- पुनरुक्तः, 5- दुष्क्रमः, 6- ग्राम्यः, 7- सन्दिग्धः, 8- निर्हेतुः, 9- प्रसिद्धिरुद्धः, 10- विद्याविरुद्धः, 11- अनवीकृतः, 12- सनियमपरिवृत्तः, 13- अनियमपरिवृत्तः, 14- विशेषपरिवृत्तः, 15- अविशेषपरिवृत्तः, 16- साकाङ्क्षः, 17- अपदयुक्तः, 18- सहचरभिन्नः, 19- प्रकाशितविरुद्धः, 20- विध्ययुक्तः, 21- अनुवादायुक्तः, 22- त्यक्तपुनः स्वीकृतः, 23- अश्लीलः इति त्रयोविंशतिः अर्थदोषाः सन्ति।

**5- रसदोषाः-** स्वशब्दवाच्यत्वम्-1- व्यभिचारिणः स्वशब्दवाच्यता, 2- रसस्य स्वशब्दवाच्यत्वम्, 3- स्थायिनः स्वशब्दवाच्यत्वम्, 4- अनुभावस्य कष्टकल्पनया व्यक्तिः, 5- विभावस्य कष्टकल्पनया व्यक्तिः, 6- प्रतिकूलविभावादिग्रहः, 7- पुनः पुनः दीप्तिः, 8- अकाण्डे प्रथनम्, 9- अकाण्डे छेदः, 10- अङ्गस्यातिविस्तृतिः, 11- अङ्गिनोऽननुसन्धानम्, 12- प्रकृतीनां विपर्ययः, 13- अनङ्गस्याभिधानम् इति त्रयोदशसंख्याकाः रसदोषाः सन्ति।

साहित्यकौमुदीकारेण श्रीविद्याभूषणेन प्रतिपादिता एते दोषाः यथावद्रूपेण काव्यप्रकाशे साहित्यदर्पणे च निरूपिताः सन्ति। दोषनिरूपणे काचिन्नवीना पद्धतिर्नैवाश्रिताऽस्ति। दोषस्य निरूपणं समाजाधीनमिति प्रायः सिद्धान्त एवास्ति। को दोषः, कश्च गुणः? इति गुणदोषस्थापनं समाजाधीनमस्ति। समाजमान्यताप्राप्तिरेव गुणत्वम्, समाजाऽनादृतत्वञ्च दोषत्वमिति सुस्पष्टमेवास्ति। काचित् प्रथा केनचित् समाजेनादृता गुणरूपा भवति, सैव

प्रथा समाजान्तरेणादृतेति दोषतामुपयाति। अतएव दोषस्थानं समाजमूलकमिति साहित्यकौमुदीकारेण सुस्पष्टत एव सिद्धान्तितमस्ति। उदाहरणं च प्रदर्शितमस्ति-

अश्लीलदोषे- भगं तव बृहद्भावि मुकुन्दभजनेन विट्। इत्युदाहृत्य भगपदस्य सम्पत्त्यर्थकत्वेऽपि अधमाङ्गप्रतीत्या व्रीडाव्यञ्जकत्वमिति व्रीडाश्लीलत्वं प्रदर्शितम्। किन्तु यदिदं भगपदमत्र व्रीडावाचि तदेव भगिनीत्यत्र नैव व्रीडां व्यञ्जयति। तथा च लिङ्गपदमपि पुरुषमूत्रेन्द्रियरूपार्थबोधकत्वात् अश्लीलमपि शिवेन युक्तं सत् शिवलिङ्गपदं सर्वस्मिन्नेव समाजे समादृतं भवतीति समाजाधीनं दोषनिरूपणमिति प्रतिपादितम्। यथा-

अत्र भगशब्दः संपत्त्यर्थकोऽप्यधमाङ्गप्रतीत्या व्रीडाबोधी। भगिनीशिवलिङ्गमात्मयोनिरित्यादौ भगादिशब्दो न तथा। केषाञ्चिद् दोषाणां मूलं तु शास्त्रमिति च्युतसंस्कृत्यप्रतीतादिभिः सुस्पष्टमेवास्ति। च्युतसंस्कृति व्याकरणलक्षणहीनत्वम्, अप्रतीतञ्च एकशास्त्रप्रसिद्धत्वमिति। यथा- **आशयो दलितो यस्य योगेन स हरिं व्रजेत्।** अत्र आशयशब्दो वासनार्थकतया योगशास्त्रमात्रप्रसिद्धः इति।

## सन्दर्भ-सूची


1. काव्यप्रकाशः- 7/1.
   साहित्यकौमुदी- 7/1.
2. काव्यप्रकाशः- 7/1.
   साहित्यकौमुदी- 7/1.
3. साहित्यदर्पणः- 1.
4. काव्यप्रकाशः, कामनी, उ0 7, पृ0 265.
5. साहित्यदर्पणः -7.
6. साहित्यकौमुदी- परि0 7/1.
7. साहित्यकौमुदी- परि0 7.




## पञ्चमोऽध्यायः

# गुणविवेचनम् अलङ्कारविवेचनम्
# शब्दालङ्काराः अर्थालङ्काराः

## गुणविवेचनम्

चमत्कार्यर्थानुभवाभावे कस्यचिदपि वाक्यस्य काव्यत्वं न केनापि स्वीक्रियते। अतः संमुचितललितसन्निवेशचारु यत् तत् काव्यं भवति। समुचितत्वञ्च रसगे, ललितसन्निवेशत्वञ्च गुणेनैवाऽऽपाद्यते। अतएव काव्यस्य लोकशास्त्रातिरिक्तत्वम्। विलक्षणशब्दार्थमयस्य काव्यस्य द्विविधं चारुत्वम्- स्वरूपमात्रनिष्ठम्, संघटनाश्रितञ्च। तत्र संघनाश्रितं चारुत्वं गुणेनैवापाद्यते। लोकेऽपि दृश्यते सौन्दर्यसौकुमार्यविशिष्टां सकलालङ्काराऽलङ्कृतापि नारी निर्गन्धकिंशुक इव न शोभामावहति गुणेन विना। यद्यपि अदोषतैव विगुणस्य गुणः इति रीत्या दोषाभावरूपा एव गुणाः। अभावस्य च किञ्चित्स्वरूपमेव नास्ति, स्वरूपाभावाच्च काव्येषु स्थानस्य का चर्चा? प्राचीनाः केचन दोषाभावरूपा गुणा इति स्वीकुर्वन्ति, तथापीदं सर्वमर्थवादरीत्या दोषनिराकरणाय प्रयासमात्रम्।

वस्तुतस्तु गुणाः नाभावरूपाः, दर्शनान्तरेषु तथा दर्शनात्। लोकेऽपि गुणहीनादपकृष्टत्वं दृश्यते। अतश्चमत्काराधाने हेतुभूतस्य रसस्योत्कर्षत्वसम्पादनाय गुणानां काव्येषु नियतं स्थानम्। अतएव अचलस्थितयो गुणाः इति काव्यप्रकाशे मम्मटभट्टाः, साहित्यकौमुद्यां विद्याभूषणाश्चाहुः। ते च गुणाः समुचितैर्वर्णैर्व्यज्यन्ते समुचितैराकारैः शौर्यादय इव।

## गुणस्वरूपम्

काव्यनाट्याचार्यैः सर्वैः गुणानां काव्येषु स्थितिः स्वीकृताऽस्ति। सर्वैरिव प्रायः गुणविवेचनमपि कृतमस्ति। गुणलक्षणमपि सर्वैः प्रतिपादितमेव। तत्र नाट्यशास्त्रप्रवर्तको भरतमुनिः गुणस्वरूपमुक्तवान् यत्-

**गुणा विपर्ययादेषां माधुर्यौदार्यलक्षणाः।**[1]

अर्थाद् दोषाणामभाव एव माधुर्यौदार्यस्वरूपा गुणाः। तत्रैव पुनः दोषस्वरूपमभिधाय

**एत एव विपर्यस्ता गुणाः काव्येषु कीर्तिताः।[2]**

इत्युक्तम्। इत्थं भरतमते गुणाः दोषाभावस्वरूपाः। परञ्च भरतस्वीकृताः दशगुणाः सर्वेऽभावात्मका एव न सन्ति, केचन भावात्मका अपि सन्ति। यथा-समता भवेन्नाम दोषाभावरूपा किन्तु सौकुमार्यौदार्यादयो गुणाः कथमभावरूपाः। एवञ्च भरतमते गुणाः रसाश्रिताः काव्याभिनयशोभाकर्तारः सन्ति।

**दण्डी**

**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।**
**ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति।।**
**काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलङ्क्रियाः।**
**साधारणमलङ्कारजातमन्यत् प्रदर्श्यते।।[3]**

इति दण्डिनः उक्त्या ज्ञायते यन्मार्गविभागार्थनिरूपिता दशगुणा अपि अलङ्कारा एव। तत्रैव (शोभाकरत्वं हि अलङ्कारलक्षणम्) तल्लक्षणयोगात् श्लेषादयो दशगुणा अप्यलङ्कारा एव। एतेषां मते काव्यशोभाविधायको गुणः। काव्यञ्च इष्टार्थव्यवच्छिन्ना पदावली। अतः शब्दार्थशोभाविधायिनो गुणा इति।

**वामनः**

सर्वप्रथमं वामनो गुणलक्षणं विधायालङ्कारेभ्यस्तेषां भेदान् निरूपितवान्। तद्यथा-

**काव्यशोभायाः कर्तारो धर्मा गुणाः।[4]**

अर्थात् शब्दार्थयोः ये धर्माः काव्यशोभां कुर्वन्ति ते गुणाः माधुर्यौजःप्रसादादयो न यमकोपमादयः, कैवल्येन तेषां काव्यशोभासम्पादकत्वाभावात्। ओजःप्रसादादीनां तु केवलानामप्यस्ति काव्यशोभाकरत्वम्। वामनस्तु गुणान् नित्यधर्मान् मनुते-

**तत्र पूर्वे नित्याः[5]**

अत्र श्लोकौ-

**युवतेरिव रूपमङ्ग ! काव्यं स्वदते शुद्धगुणं तदप्यतीव।**
**विहितप्रणयं निरन्तराभिः सालङ्कारविकल्पकल्पनाभिः।।**
**यदि भवति वचश्च्युतं गुणेभ्यो युवतेरिव यौवनवन्ध्यमङ्गनायाः।**
**अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते।।[6]**

एवं दण्डिवामनयोर्मते गुणाः शब्दार्थधर्माः, न रसधर्माः। प्रत्युत दीप्तरसत्वं कान्तिः इति लक्षणेन कान्तिगुणाङ्गभूतो रस एवेति।

**आनन्दवर्धनः**

आनन्दवर्धनस्तु रसधर्मत्वं गुणानां प्रतिपादयति। तन्मते अङ्गिनं रसं येऽवलम्बन्ते ते गुणा इति-

**तमर्थमवलम्बन्ते येऽ ङ्गिनं ते गुणाः स्मृताः।**
**अङ्गाश्रितास्त्वलङ्कारा: मन्तव्याः कटकादिवत्।।[7]**

**मम्मटः**

**ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।**
**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः॥**[8]

इति कारिकया- 1- अङ्गिनो रसस्य धर्माः, 2- रसस्योत्कर्षहेतवः, 3- अचलस्थितयः गुणा भवन्तीति मम्मटेन प्रतिपादितम्।

**विद्याभूषणः**

साहित्यकौमुदीकारो विद्याभूषणोऽपि गुणं काव्यप्रकाशानुसारमेव प्रतिपादितवान्-

**ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।**
**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः॥**

इति कारिकाव्याख्यायाम्-अङ्गिनो रसस्योत्कर्षका धर्मा गुणाः, आत्मनः इव शौर्यादयः। ते च रसविशेषे नियतविशेषाः स्युः। आत्मनः इवेति। यथा शौर्यादयो नाकृतेः, तथा माधुर्यादयोन शब्दार्थ- युग्मस्य। न ह्यस्याकारः शूरः स्थूलत्वादिति सहेतुः अस्थूलेऽपि सिंहे शौर्यवीक्षणात्।[9]

इत्येवं शरीरे प्राधान्येन स्थितस्यात्मनो यथा शौर्यादयो धर्माः नाचेतनस्य शरीरस्य तथैव काव्ये प्राधान्येन स्थितस्य रसस्य शृङ्गारादेर्ये धर्मास्ते गुणाः। एवं शब्दार्थधर्मा गुणा इति वदन्तो दण्डिवामनप्रभृतयः परास्ताः। रसस्य धर्मा इत्यनेन साक्षात्सम्बन्धेन रसाश्रिता इति। ननु रसस्य साक्षाद् धर्मो रसत्वम्, तत्र गुणत्वं प्रसक्तमत आह- उत्कर्षहेतवः इति। एवञ्च रसधर्मत्वे सति रसोत्कर्षकत्वं गुणत्वम्। अथवा रसधर्मत्वमिति लक्षणे न देयम्, अचलस्थितयो गुणाः इति वक्तव्यम्। अचला नियता स्थितिरवस्थानं येषां ते अचलस्थितयः, नियतस्थितय इति। नैयत्यं च रसेन, रसोपकारेण वा ज्ञेयम्। एवम्- रसोत्कर्षकत्वे सति रसाव्यभिचारिस्थितित्वम्, अव्यभिचारेण रसोपकारकत्वञ्चेति तल्लक्षणद्वयं फलितम्।

लक्षणमिदं प्रतिपाद्य साहित्यकौमुदीकारो वृत्तौ वामनादिसम्मतवर्णधर्मत्वस्य निराकरणमपि कृतवान्। तद्यथा वितताकारस्य दर्शनात् अस्याकार एव शूरः इति व्यवहारो यथोपचाराद् भवति, तथैव सुकुमारवर्णानां चान्यवैलक्ष्येन व्यञ्जकत्वप्रतिपत्तये उपचारेणैते वर्णा एव मधुरा इति क्वचिदभियुक्ता व्यवहरन्ति। इति व्यवहारं दृष्ट्वा अनभिज्ञा वितताकारस्यैव शूरत्वम्, सुकुमारवर्णानामेव माधुर्यादि मन्यमानास्तथैव व्यवहरन्ति। एतावता गुणाः वर्णधर्माः भवितुं नार्हन्ति, गुणानां रसैकधर्मत्वे लाघवात् वर्णरचनोभयवृत्तित्वे गौरवाच्चेति। मधुरो वर्णः मधुरा रचना इत्याद्यौपचारिको व्यवहारः। अपि तु वर्णा गुणधर्मा एव, वर्णानां गुणाभिव्यञ्जकत्वात्। यथोक्तम्-

**वर्णास्त्वाकृतिवद्गुणव्यञ्जका वक्ष्यन्ते।**[10]

अथ किं नाम गुणत्वम्? द्रुत्यादिचित्तवृत्तिप्रयोजकत्वम्, प्रयोजकतासम्बन्धेन द्रुत्यादिकमेव माधुर्यादिकमिति? अत्र द्रुत्यादिप्रयोजकञ्चेत् माधुर्यादि तर्हि

अदृष्टकालेश्वरेच्छादीनां कार्यमात्रप्रयोजकत्वात् द्रुत्यादिप्रयोजकतया तत्रातिप्रसक्तस्य माधुर्यादेर्वारणाय अदृष्टादिविलक्षणं शब्दार्थरसरचनागतमेव प्रयोजकत्वं ग्राह्यम्। ईदृशस्य माधुर्यादेः शब्दार्थरचनास्वपि सत्वाद् वर्णो मधुरोऽर्थो मधुरः, रचना मधुरेत्यादिव्यवहारे गौणीवृत्तिरपि न कल्पनीया भवति।

मनोवैज्ञानिकदृष्ट्या- सामाजिकानां नवरसजन्यास्तिस्रोऽवस्थाः, तत्र शृङ्गारकरुण-शान्तेभ्यश्चित्तस्य द्रुतिः, वीरबीभत्सरौद्रेभ्यो विस्तारः, हास्याद्भुतभयानकेभ्यो विकास इति अवस्थात्रयरूपकार्यवैचित्र्यनियामकतया कारणत्रयमेव कल्प्यते। एवं सूक्ष्मरूपेण चित्तवृत्तिरूपो गुणः स्थूलरूपेण च शब्दबन्धादिरूप इति।

वस्तुतस्तु मम्मटभट्ट- विद्याभूषणादिस्वारस्येन गुणा रसधर्मा एव। गुण इति कथनेनैव ज्ञायते, कश्चन गुणी वर्तत इति। न च काव्यशरीरभूतौ शब्दार्थाविव गुणिनौ, शरीरे गुणानङ्गीकारात्। मृतस्यात्मव्यतिरिक्तस्य शरीरसत्त्वेऽपि गुणादर्शनात्। अतः आत्मधर्माः (रसधर्माः) एव गुणाः इति सिद्धम्।

**गुणानां संख्या**

भरतमते श्लेषः, प्रसादः, समता, समाधिः, माधुर्यम्, ओजः, पदसौकुमार्यम्, अर्थव्यक्तिः, उदारता, कान्तिश्च। यथोक्तम्-

**श्लेषः प्रसादः समता समाधिः माधुर्यमोजः पदसौकुमार्यम्।**
**अर्थस्य व्यक्तिश्च उदारता च कान्तिश्च काव्यस्य गुणा दशैते।।**[11]

दण्डिनापि प्रायस्त एव दशगुणाः स्वीकृताः सन्ति-

**श्लेषः प्रसादः समता माधुर्यं सुकुमारता।**
**अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः।।**[12]

वामनेनापि प्राय इमे एव गुणाः स्वीकृताः, परं दश शब्दगुणाः, दश चार्थगुणा इति विंशतिगुणाः प्रतिपादिताः। यथा-

**ओजः प्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारता-**
**ऽर्थव्यक्तिकान्तयो बन्धगुणाः**[13]

इति दश शब्दगुणाः। त एवार्थगुणाः[14] इति पूर्वोक्ताः शब्दगुणा एव नाम्नाऽर्थगुणा अपि सन्ति प्रतिपादिताः।

अग्निपुराणे अष्टादशगुणाः स्वीकृताः सन्ति- षट् शब्द गुणाः, षडर्थगुणाः, षडुभयगुणाः इति। कुन्तकेन तु षडेव।

भोजराजेन चतुर्विंशतिःशब्दगुणाः (बाह्यगुणाः), चतुर्विंशतिराभ्यन्तरगुणाः (अर्थगुणाः) चतुर्विंशतिश्च वैशेषिकगुणाः इति सङ्कलेनन द्वासप्ततिः (72) गुणाः स्वीकृताः सन्ति।

शब्दगुणाः यथा-

**श्लेषः प्रसादः समता माधुर्यं सुकुमारता।**
**अर्थव्यक्तिस्तथा कान्तिरुदारत्वमुदात्तता।।**

**ओजस्तथान्यदौर्जित्यं प्रेयानथ सुशब्दता।**
**तद्वत्समाधिः सौक्ष्म्यं च गाम्भीर्यमथ विस्तरः॥**
**संक्षेपः सम्मितत्वञ्च भाविकत्वं गतिस्तथा।**
**रीतिरुक्तिस्तथा प्रौढिरथैषां लक्ष्यलक्षणे॥**

शब्दगुणेषु परिगणिताः एत एव गुणाः अर्थगुणेष्वपि प्रोक्ताः सन्ति। असाधुगुणतादयश्चतुर्विंशतिः वैशेषिकगुणाः सन्ति। आचार्येण मम्मटेन तु वामनमतं खण्डयता दशशब्दगुणानां दशार्थगुणानाञ्च त्रिष्वेवान्तर्भावत्वं प्रतिपादयता माधुर्यौजःप्रसादा इति त्रय एव गुणाः स्वीकृताः सन्ति-

**माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश।**[15]

साहित्यदर्पणकारेण श्रीविश्वनाथेनापि मम्मटमतमेव समर्थितमस्ति-

**माधुर्यमोजोऽथ प्रसाद इति ते त्रिधा।**[16]

साहित्यकौमुदीकारो विद्याभूषणस्तु गुणविषये मम्मटमतमेवानुसरति-

**माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश।**[17]

वामनोक्तानां गुणानां केषाञ्चित् त्रिषु माधुर्यौजःप्रसादेषु अन्तर्भावात्, केषाञ्चिद् दोषाभावरूपत्वात्, केषाञ्चिद् दोषरूपत्वादेव दश शब्दगुणत्वमर्थगुणत्वञ्च खण्डितमस्ति श्रीविद्याभूषणेन-

**केचिदन्तर्भवन्त्येषु दोषत्यागात्परे श्रिताः।**
**अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश॥**

एवं विद्याभूषणमते माधुर्यौजःप्रासादाख्यास्त्रयो गुणाः सन्ति। वस्तुतस्तु एते एव सहृदयैः मान्यताप्राप्ताः अपि सन्ति। तथा चैतेषां गुणानां व्यञ्जकाः सन्ति-वर्णाः, समासः, रचनादयश्चेति-

**वर्णाः समासो रचनास्तेषां व्यञ्जकतामिताः।**[18]

### माधुर्यम्

माधुर्यं नाम आह्लादकत्वमिति। एवमाह्लादकत्वं माधुर्यस्य लक्षणम्। शृङ्गारे रसे माधुर्येण चित्तस्य द्रुतिर्जायते। द्रुतिश्च- स्वाभाविकानाविष्टत्वात्मककाठिन्यमन्युक्रोधादिकृतदीप्तत्वविस्मयहासाद्युपहितविक्षेपपरित्यागेन रत्याद्याकारानुविद्धानन्दोद्बोधेन सहृदयचित्तार्द्रप्रायत्वम् इति साहित्यदर्पणे सुस्पष्टम्।

इदं च माधुर्यं संयोगशृङ्गारे, तदपेक्षया करुणे, तदपेक्षया विप्रलम्भे ततोऽपि शान्ते अतिशयतां गच्छति-

**आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम्।**
**करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्।।**[19]

माधुर्यव्यञ्जकाः सन्ति मूर्ध्निर्गान्त्यगाः स्पर्शाः, अटवर्गाः, रणौ लघू इति वर्णाः, अवृत्तिः मध्यवृत्तिर्वा घटना इति।

**मूर्ध्नि वर्गान्त्यगाः स्पर्शाः अटवर्गाः रणौ लघू।**
**अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा।।**[20]

यथा- अनङ्गरङ्गप्रतिमं तदङ्गम्। यद्वा- लताकुञ्जं गुञ्जन् इत्यादि। साहित्यकौमुद्यां श्रीविद्याभूषणेन माधुर्यप्रसङ्गे उदाहृतम्-

**सन्ततं सन्तनोत्यस्या नितान्तन्तान्तचेतसः।**
**दुरन्ता कान्तचिन्तेयं हन्त सन्तापसन्ततिम्।।**

इति तु नोचितम्, नकारतुक्तकारप्रयोगेऽपि व्यवहारे श्रवणकटुतायाः प्रतीतेरिति।

**ओजः**

दीप्त्या चित्तविस्तारहेतुः ओजो नाम गुणः। स च वीररसस्थितिः, क्रमशश्च वीरापेक्षया बीभत्से तदपेक्षयापि रौद्रे अतिशयी इति-

**दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थितिः।**
**बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च।।**[21]

तद्व्यञ्जकाश्च वर्णाः वर्गस्य आदितृतीयाभ्यां युक्ताः, रेफशकारौ टवर्गस्थाश्च वर्णाः तथा च दीर्घसमासः, उद्धता रचना च सन्ति।

**प्रसादः**

यः शुष्केन्धनाग्निवत् स्वच्छजलवत् चित्तं क्षिप्रं व्याप्नोति स प्रसादो गुणः। अयं च सर्वेषु रसेषु प्राप्तस्थितिरिति-

**शुष्केन्धनाग्निवत्स्वच्छजलवत्सहसैव यः।**
**व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः।।**[22]

श्रवणमात्रेणार्थबोधकाः वर्णाः समासो रचना वाऽस्य प्रसादस्य व्यञ्जकाः सन्ति-

**श्रुतिमात्रेण शब्दानां यत्रार्थप्रत्ययो भवेत्।**
**साधारणं समग्राणां स प्रसादो गुणो मतः।।**[23]

## अलङ्कारविवेचनम्

प्राप्तावसरतयाऽलङ्कारे निरूपणीये पूर्वमलङ्कारस्वरूपं काव्ये तत्स्थानं च विविच्यते। यद्यपि अलङ्कृतिरलङ्कारः इति भावव्युत्पन्नोऽलङ्कारशब्दोऽलङ्कारशास्त्ररूपेऽर्थे प्रयुज्यते, यत्र काव्यप्रयोजन-काव्यस्वरूप- काव्यकारण- काव्यभेद- काव्यदोष- गुणालङ्कारादीनां विवेचनं भवति। नायमलङ्कारोऽत्र प्रक्रान्तः, अत्र तु काव्यकारण-प्रयोजन- स्वरूप-भेद-दोषगुणादीनां विवेचनानन्तरं काव्योत्कर्षकोऽअलङ्क्रियतेऽनेन इति करणव्युत्पन्नोऽलङ्कारो विविच्यते। यदुक्तम्-

**काव्य ग्राह्यमलङ्कारात्[24] ........**
**सौन्दर्यमलङ्कारः ............**
**उत्कर्षहेतवः प्रोक्ताः गुणालङ्काररीतयः।**

अस्यालङ्कारस्य काव्ये का स्थितिरिति विचारणीये वेदव्यासेन व्यासेनोऽुक्तम्-

**अलङ्काररहिता विधवेव सरस्वती[26]**

इदमेव (अलङ्कारप्रियतैव) कारणं काव्यस्वरूप-रस-दोष-गुण- रीत्यलङ्कार-निरूपणात्मके शास्त्रे केवलमलङ्कारशास्त्रव्यपदेशस्य। अतएव अनलङ्कृती इति मम्मटकृत-काव्यलक्षणं समाक्षिपता महाकविना जयदेवेनोक्तं स्वकीये चन्द्रालोके-

**अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।**
**असौ न मन्यते कस्मादनुष्णमनलङ्कृती॥**

एवञ्च काव्येऽ लङ्कारः सौन्दर्याधायकत्वेनावश्यमेव स्वीकरणीयः। साक्षादेव शृङ्गाररसस्वरूपा गुणैर्युक्ताऽपि निर्भूषा कामिनीव रसैर्गुणैश्च युक्तमपि काव्यं तावन्नाधिकं शोभते यावन्नालङ्कारप्रवेशः। यथोक्तम्-

**न कान्तमपि निर्भूषं विभाति वनिताननम्।[27]**

एवं काव्येऽलङ्कारस्यातीवमहत्त्वपूर्णं स्थानं वरीवर्ति।

## अलङ्कारस्वरूपम्

अलङ्कारत्वं च रसादिभिन्न- व्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयता-सम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम्।[28]

अस्य सङ्गतिस्त्वेवम समवायसम्बन्धावच्छिन्न-चमत्कारत्वावच्छिन्न-चमत्कारनिष्ठजन्यता-निरूपिता जनकता अनुप्रासादिविशिष्टशब्दज्ञाने उपमादिविशिष्टार्थज्ञाने च, तदवच्छेदकता विषयतासम्बन्धेनानु-प्रासादिविशिष्टे शब्दे, उपमादिविशिष्टेऽर्थे च, तदवच्छेदकत्वमनु-प्रासादित्वमुपमादित्व-ञ्चालङ्कारत्वमिति।ननु रसादिविशिष्टशब्दार्थज्ञानं चमत्कारजनकं तदवच्छेदकता रसादिविशिष्टशब्दार्थयोः, तदवच्छेदकत्वं रसादित्वम्, एवं रसादावप्यलङ्कारप्रसक्तिः। अतस्तद् वारणाय रसादिभिन्नत्वमिति। व्यङ्ग्यालङ्कारेऽतिव्याप्तिवारणाय व्यङ्ग्यभिन्नत्वे सतीति।

मम्मटभट्टैस्तु काव्यप्रकाशेऽतीव सरलतयाऽलङ्कारस्वरूपं प्रतिपादितमस्ति-

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**
**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥[29]**

अस्याः कारिकायाः- ये सन्तं तमुपकुर्वन्ति, अङ्गद्वारेणोपकुर्वन्ति, जातुचिदुपकुर्वन्ति- इति खण्डत्रयं कृत्वा तत्स्वारस्येन वामनीकारेण लक्षणत्रयं प्रतिपादितमस्ति-

1- रसावृत्तित्वे सति रसोपकारकत्वम्।

2- रसोपकारकत्वे सति रसानियतस्थितिकत्वम्।

3- अनियमेन रसोपकारकत्वम्। इति।

साहित्यकौमुदीकारस्यापीदमेवाभीष्टमस्ति। तेनापि गुणनिरूपणप्रकरणेऽ ष्टमे परिच्छेदे गुणालङ्कारयोर्भेदप्रतिपादनावसरे अलङ्कारस्येदमेव लक्षणं कृतमस्ति-

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**
**हारादिवदलङ्कारास्ते ऽ नुप्रासोपमादयः।।**[30]

अस्यापि परिष्कारः पूर्वोक्तप्रकारैः कर्तुं शक्यते। तत्र रसोपकारकत्वं शब्दार्थान्यतरोपकारद्वारेण इत्यवश्यमेव योजनीयम् अन्यथा कामिनी-कमल- कलशादावतिप्रसक्तिः स्यादिति। यथोक्तम्-

रसोपकारकत्वे सति रसावृत्तित्वमिति लक्षणं कामिन्यामतिव्याप्तम्, कामिनी हि आलम्बनत्वेन शृङ्गाररसोपकारिका। बाह्यवस्तुत्वात् रसावृत्तिता च तस्याः। एवं रसोपकारकत्वे सति रसव्यभिचारिस्थितित्वमिति कमलेऽतिव्याप्तम्, कमलं हि उद्दीपनविभावत्वेन रसोपकारकमपि जडे जलादौ स्थित्या रसव्यभिचारि, यथा धूमोपकारकोऽपि वह्निः धूमाभाववत्यपिण्डे विद्यमानो धूमव्यभिचारी तद्वत्। अनियमेन रसोपकारकत्वञ्च कलशेऽतिव्याप्तम्। कलशः कदाचित् कुचस्मारकत्वेन रसोपकारकः कदाचिन्नेति, तत्रानियमेन रसोपकारकता सिद्धा। अतस्तद्वारणाय शब्दार्थान्यतरोपस्कारद्वारेणेत्युक्तम्, कामिनीकमलकलशाद्याः शब्दाः स्वयं न कामिन्यादीन् शब्दान् न वा अर्थात् विभूषयन्ति।[31]

साहित्यदर्पणे तु- ये शब्दार्थयोः अस्थिराः धर्माः, किञ्च शब्दार्थयोः शोभातिशायिनः, तथा रसादीनुपकुर्वन्ति तेऽलङ्काराः-

**शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः।**
**रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत् ।।**[14]

साहित्यदर्पणस्य लक्षणमिदं काव्यप्रकाशं साहित्यकौमुदीञ्चानुसरति।

## अलङ्कारविभागाः

शब्दार्थान्यतरोपकारद्वारेण रसोपकारकत्वम् अलङ्कारसामान्यलक्षणमिति क्वचित् साक्षात् सम्बन्धेन शब्दमुपकुर्वन्तः काव्यात्मभूतं रसमुपकुर्वन्ति, क्वचिच्च साक्षाद्रसमुपकुर्वन्तो रसमुपकुर्वन्तीति, क्वचिच्च शब्दार्थाउभावप्यलङ्कुर्वन्तो रसादीनुपकुर्वन्तीति अलङ्काराः त्रिविधाः- 1- शब्दालङ्काराः, 2- अर्थालङ्काराः, 3- उभयालङ्काराश्चेति।

## उभयालङ्काराः

यद्यपि शब्दस्य प्रथमोपस्थितेः शब्दालङ्काराणामेव विवेचनस्य प्रथमं निरूपणमावश्यकम्, तथापि सूचीकटाहन्यायेन पूर्वमुभयालङ्काराः प्रतिपादिताः सन्ति। यथोक्तं दर्पणे-

**शब्दार्थयोः प्रथमं शब्दस्य बुद्धिविषयत्वाच्छब्दालङ्कारेषु वक्तव्येषु शब्दार्थालङ्कारस्यापि ..... लक्षितत्वात् प्रथमं तमेवाह।**[33]

शब्दपरिवृत्त्यसहत्वं शब्दालङ्कारत्वम् शब्दपरिवृत्तिसहत्वमर्थालङ्कारत्वम् इति शब्दालङ्कारस्यार्थालङ्कारस्य च लक्षणम्। यत्र किञ्चित् शब्दपरिवृत्तिसहत्वं किञ्चिच्चासहत्वं भवति तत्रोभयालङ्कारत्वं सिद्धम्।

एतेषु उभयालङ्कारेषु वक्रोक्ति- पुनरुक्तवदाभास- श्लेषादीनां ग्रहणं कर्तुं शक्यते तथापि सर्वे एते शब्दालङ्कारे एव लक्षिताः सन्ति। पुनरुक्तवदाभासस्योभयालङ्कारत्वं तु साहित्यदर्पणकारेण सुस्पष्टं प्रतिपादितम्- शब्दार्थालङ्कारस्यापि पुनरुक्तवदाभासस्य चिरन्तनैः शब्दालङ्कारमध्ये लक्षितत्वात्प्रथमं तमेवाह। इति काव्यप्रकाशे साहित्यकौमुद्यां च पुनरुक्तवदाभासस्य शब्दनिष्ठत्वमर्थनिष्ठत्वं च प्रतिपाद्य उभयोरपि पृथक् पृथगुदाहरणं प्रदर्श्योभयालङ्कारत्वं संसाधितमस्ति। यथा-

**त्वद्वाणविषयो नाभूदबलास्त्री रिपुः क्वचित्।**
**पारीन्द्रोऽभ्येति कुम्भीन्दं मशकं न स कृन्तति।।**

इति शब्दनिष्ठस्योदाहरणम्। अर्थनिष्ठस्य तु-

**द्विषां विकर्तनो भास्वान् बुधः सौम्यः स राजते।**[34]

अत्र पूर्वस्मिन् उदाहरणे अबला स्त्री इति पुनरुक्तवदाभासः अस्मिन् तु विकर्तनः भास्वान्, बुधः सौम्यः इत्यादिषु। पुनश्च-

**तथा शब्दार्थयोरयम्**

इत्युक्त्वा शब्दार्थगतत्वेनैकत्रोदाहरणमपि प्रदर्शितमस्ति-

**तव तनु शरीरसदृशीं काञ्चनकनकस्य वीरुधं नेक्षे।**
**राधे सुमुखि भवत्या मुखवदनं कोऽपि शुभ्रांशुः।।**

अत्र काञ्चनकनक-मुखवदन इत्यादौ पुनरुक्तिरिवापाततः प्रतीतिः। अत एवोक्तं वृत्तौ- अत्रैकस्य शब्दस्य परिवृत्तौ नायमलङ्कारस्तेन शब्दाश्रयः। पदस्य परिवृत्तौ तु स न हीयते तेनार्थाश्रयश्चेत्युभयालङ्कारता[35]

साहित्यकौमुदीकारस्य सर्वमिदं प्रतिपादनं काव्यप्रकाशानुसारि वर्तते। साहित्यदर्पणे तु शब्दगतत्वार्थगतत्वादिभेदं विनैव केवलमेकमुदाहरणं प्रदर्शितमस्ति-

**भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशु-शीतगुः।**
**जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः।।**

इति साहित्यदर्पणस्योदाहरणमधिकं सुस्पष्टमस्ति।

प्राचीनैस्तु पुनरुक्तवदाभासोऽपि शब्दालङ्कारत्वेनैव परिगणितोऽस्ति। यथा साहित्यदर्पण- काव्यप्रकाश साहित्यकौमुद्यादिव्याख्यानैः सुस्पष्टम्। काव्यप्रकाशसङ्केतेऽपि सोमेश्वरेणोक्तम्-

**वक्रोक्तिरप्यनुप्रासो यमकं श्लेषचित्रके।**
**पुनरुक्तवदाभासः शब्दालङ्कृतयस्तु षट्।।**[36]

श्लेषस्य शब्दालङ्कारत्वार्थालङ्कारत्वविषये त्वस्यैव विवादः। यत् साहित्यदर्पणे,

काव्यप्रकाशे, साहित्यकौमुद्याञ्च व्याख्यातमस्ति। श्लेषस्य सभङ्गाभङ्गभेदेन अभङ्गस्य शब्दालङ्कारत्वम्, सभङ्गस्य चार्थालङ्कारत्वम् इति स्वीकृते सति सिद्धमेव सभङ्गाभङ्गस्य येन ध्वस्तमनोभवेन इत्यादेः उभयालङ्कारत्वम्।

एवमेव वक्रोक्त्यलङ्कारस्यापि श्लेषगतस्य सभङ्गाभङ्गतया उभयालङ्कारतेति। तथाप्येतयोः न केनाप्युभयालङ्कारे परिगणनेति नात्रापि प्रतिपाद्यते।

**शब्दालङ्काराः**

शब्दपरिवृत्त्यसहत्वं शब्दालङ्कारत्वम्। अर्थात् यत्र तच्छब्दसत्त्वे तच्चमत्कारः, तच्छब्दाभावे चमत्काराभाव इति तत्र शब्दालङ्कारत्वम्। यद्यपि शब्दालङ्कारे केवलम् अनुप्रासचित्रालङ्कारावेव स्तः, यत्रार्थस्योपयोगो न भवति, अन्येषु वक्रोक्ति- यमक- श्लेषादिषु तु अर्थापेक्षां विना चमत्कार एव न भविष्यतीति तत्रास्त्येवार्थस्याप्युपयोगित्वम्। अनुप्रासेऽपि रसाद्यनुगतत्वेन प्रकृष्टो न्यासः अनुप्रासः इति व्युत्पत्तेः, सिद्धमेव अर्थसाहाय्यम्। चित्रालङ्कारेऽपि अकघटत् इत्यादि वर्णानां चित्रतयोपयोगे तस्य चित्रतैव स्यात् नालङ्कारतेति। तथापि एतेषु शब्दस्यैवान्वयव्यतिरेकाभ्यां प्राधान्यात् शब्दालङ्कारत्वम्।

प्रकृतेऽस्मिन् प्रतिपाद्ये ग्रन्थे साहित्यकौमुद्यां शब्दालङ्कारेषु- 1- वक्रोक्तिः, 2- अनुप्रासः, 3- यमकम्, 4- श्लेषः, 5- चित्रम्, 6- पुनरुक्तवदाभासः इति षण्णां प्रतिपादनं कृतमस्ति। काव्यप्रकाशेऽपि क्रमशः एते एव सन्ति निरूपिताः। साहित्यदर्पणे तु 1- पुनरुक्तवदाभासः, 2- अनुप्रासः, 3- यमकम्, 4- वक्रोक्तिः, 5- भाषासमः, 6- श्लेषः, 7- चित्रम् इति सप्त शब्दालङ्काराः प्रतिपादिताः दृश्यन्ते। साहित्यरत्नाकरे श्रीधर्मसूरिणा तु शब्दालङ्कारेषु अनुप्रास- पुनरुक्तवदाभास- यमक-चित्राऽलङ्कारेति अलङ्कारचतुष्टयस्यैव वर्णनमस्ति। वस्तुतस्तु भाषासमस्य श्लेषे एवान्तर्भावः। यतो हि अनेकासु भाषासु एकत्र सत्वे श्लेषो भवति। यथा-

**महच्चित्रं तमपरं गौरवेण महदादिहम्।**
**सामदेहं मोहहरं संतं भज उमावरम्।।**[37]

इति संस्कृतप्राकृतयोः सारूप्याद् भाषाश्लेषः स्वीकृतः। भाषासमालङ्कारस्य साहित्यदर्पण-कारेण-

**शब्दैरेकविधैरेव भाषासु विविधास्वपि।**
**वाक्यं यत्र भवेत्सोऽयं भाषासम इतीष्यते।।**

इति लक्षणं विधाय-

**मञ्जुलमणिमञ्जीरे कलगम्भीरे विहारसरसीतीरे।**
**विरसासि केलिकीरे किमालि धीरे च गन्धसारसमीरे।।**

इत्युदाहरणं दत्तम्। अत्र एक एव श्लोकः संस्कृत- प्राकृत- सौरसेनी-प्राच्या ऽवन्ती- नागरापभ्रंशादिविविधभाषासु एकविध एवेति भाषासमता। एवं भाषाश्लेषे भाषासमालङ्कारे

च न कोऽपि विशेषः अपितु एकविधतैवेति न पृथग् भाषासमालङ्कारः स्वीकृतः साहित्यकौमुदीकारेण।

साहित्यकौमुद्यां सर्वेषां शब्दालङ्काराणां प्रतिपादनं सामान्यतया समानेनैव रूपेण कृतमस्ति। क्वचिदपि प्रतिपादने किञ्चिदपि पृथग्वैशिष्ट्यमनेन नैव प्रतिपादितमिति न तेषां विवेचनमत्रोपस्थाप्यते।

**अर्थालङ्काराः**

शब्दपरिवृत्तिसहत्वमर्थालङ्कारत्वमित्यर्थालङ्कारलक्षणम्। अर्थालङ्कारविवेचना साहित्यकौमुद्यां दशमे परिच्छेदे कृताऽस्ति। अर्थालङ्कारसंख्या विषये काव्यशास्त्रिणः एकमतयो न सन्ति। अलङ्काराणां संख्या न्यूनाऽऽसीत् गते काले सूक्ष्मदर्शिभिराचार्यैः यथा यथा विचारितं तथा तथा नवीनानामलङ्काराणां विवेचनं दृश्यते किन्तु पश्चादेतेषामतिभूयसी संख्या याता। चमत्कारनावीन्यमेवालङ्कारान्तरोत्पत्तिकारणमिति चमत्काराणामियत्ताभावात्। यथोक्तं काव्यादर्शे आचार्येण दण्डिना-

**ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति।**[38]

वाग्विकल्पानामानन्त्यात् इति ध्वनिकारेणापि समर्थितत्वात्। चन्द्रालोककारेण श्रीजयदेवेन पञ्चनवतिः (95) हेमचन्द्रेण काव्यानुशासने नवविंशतिः (29), अलङ्कारसर्वस्वकारेण श्रीराजानकरुय्यकेनालङ्कारसर्वस्वे विद्यानाथेन प्रतापरुद्रीये च (68) अष्टषष्ठिः, श्री अप्पयदीक्षितेन कुवलयानन्दे शताधिकैकविंशतिः (121) काव्यप्रकाशकारेण श्रीमम्मटेन एकषष्ठिः (61), साहित्यदर्पणकारेण श्रीविश्वनाथेन पञ्चसप्ततिः (75), रसगङ्गाधरकारेण श्रीपण्डितराजजगन्नाथेन सप्ततिः (70) अर्थालङ्काराः स्वीकृताः सन्ति।

श्रीबलदेवविद्याभूषणेन साहित्यकौमुद्यां दशमे परिच्छेदे त एवार्थालङ्काराः प्रतिपादिताः सन्ति ये काव्यप्रकाशस्य दशमे उल्लासे श्रीमम्मटेन प्रतिपादिताः। अलङ्काराणां क्रमोऽपि तथैवास्ति यथा काव्यप्रकाशे। अत्रापि काव्यप्रकाशवत् एकषष्ठिः (61) अलङ्काराणां प्रतिपादनमस्ति किन्तु एकादशपरिच्छेदस्य कल्पनां कृत्वा तत्रैकादशे परिच्छेदे-

इह भरतोक्तेभ्यः केचन परिशिष्टाः प्रदर्श्यन्ते इत्युक्त्वा शब्दालङ्कारौ द्वौ, द्वादशार्थालङ्काराश्च पृथक् प्रतिपादिताः दृश्यन्ते। एते परिशिष्टाः अलङ्काराः साहित्यदर्पणमनुसरन्ति किन्तु साहित्यकौमुद्यां निरूपिताः- 1- परिकराङ्कुरः, 2- मिथ्याध्यवसितिः। 3- अनुज्ञा, 4- अनुगुणः इति चत्वारोऽलङ्काराः साहित्यदर्पणे न सन्ति। साहित्यदर्पणकारेण- 1- रसनोपमा, 2- मालोपमा, 3- रसवदादिः, 4- भावोदयादिः इति चत्वारोऽन्येऽलङ्काराः विवेचिताः सन्ति। एवं साहित्यदर्पणीया संख्या साहित्यकौमुदीं सर्वथाऽनुसरति। साहित्यदर्पणप्रतिपादिते रशनोपमामालोपमे श्रीविद्याभूषणेन उपमालङ्कारे एव निरूपिते स्तः, न पृथक्। रसवदाद्यलङ्काराः श्रीविद्याभूषणेन नैव स्वीकृताः सन्ति।

साहित्यकौमुदीकारेण पृथक् अतिरिक्तत्वेन निरूपितेषु अर्थालङ्कारेषु अनुज्ञाऽलङ्कारस्य प्रतिपादनं रसगङ्गाधरे दृश्यते। श्रीअप्पयदीक्षितकृतकुवलयानन्दे तु परिकराङ्कुर-मिथ्याध्यवसत्यनुज्ञानुगुणाः सर्वेऽपि चत्वारो विवेचिताः सन्ति।

एवं ये येऽलङ्काराः कविमनसि सङ्घटिताः आसन् ते सर्वेऽपि स्वच्छन्दरूपेणैकादशे परिच्छेदे विवेचिताः। एवञ्च परिशिष्टालङ्कारविषयेऽस्य कः आदर्शः, साहित्यदर्पणकारो विश्वनाथो वा कुवलयानन्दकारोऽप्पयदीक्षितो वा? इति नैव कथितुं शक्यते। यतो हि साहित्यकौमुदीप्रतिपादितौ निश्चयानुकूलालङ्कारौ कुवलयानन्दे न स्तः। शब्दालङ्कारार्थालङ्कार-सङ्कलनेन चतुर्दशस्वलङ्कारेषु दशालङ्काराणां प्रतिपादनं साहित्यदर्पणवत् चतुर्णां च कुवलयानन्दवदस्ति।

## साहित्यकौमुदीकारेण प्रतिपादिता अर्थालङ्काराः

साहित्यकौमुदीकारेण श्रीबलदेवविद्याभूषणेन अधोलिखिता अर्थालङ्काराः प्रतिपादिताः सन्ति-

1- उपमा, 2- अनन्वयः, 3- उपमेयोपमा, 4- उत्प्रेक्षा, 5- ससन्देहः, 6- रूपकम्, 7- अपह्नुतिः, 8- श्लेषः, 9- समासोक्तिः, 10- निदर्शना, 11- अप्रस्तुतप्रशंसा, 12- अतिशयोक्तिः, 13- प्रतिवस्तूपमा, 14- दृष्टान्तः, 15- दीपकम्, 16- तुल्ययोगिता, 17- व्यतिरेकः, 18- आक्षेपः, 19- विभावना, 20- विशेषोक्तिः, 21- यथासंख्यम्, 22- अर्थान्तरन्यासः, 23- विरोधः, 24- स्वभावोक्तिः, 25- व्याजस्तुतिः, 26- सहोक्तिः, 27- विनोक्तिः, 28- परिवृत्तिः, 29- भाविकम्, 30- काव्यलिङ्गम्, 31- पर्यायोक्तम्, 32- उदात्तम्, 33- समुच्चयः, 34- पर्यायः, 35- अनुमानः, 36- परिकरः, 37- व्याजोक्तिः, 38- परिसंख्या, 39- कारणमाला 40- उत्तरम्, 41- अन्योन्यम्, 42- सूक्ष्मः, 43- सारः, 44- असङ्गतिः, 45- समाधिः, 46- समम्, 47- विषमः, 48- अधिकम्, 49- प्रत्यनीकम्, 50- मीलितम्, 51- एकावली, 52- स्मरणम्, 53- भ्रान्तिमान्, 54- प्रतीपः, 55- सामान्यम्, 56- विशेषः, 57- तद्गुणः, 58- अतद्गुणः, 59- व्याघातः, 60- संसृष्टिः, 61- सङ्करः।

## अर्थालङ्कारेषु विशेषः

एतेषु पूर्वं परिगणितेषु काव्यप्रकाशवत्प्रतिपादितेषु एकषष्टिसंख्याकेषु अर्थालङ्कारेषु येषु येषु किञ्चिद् वैशिष्ट्यं प्रतिपादितमस्ति ते एकैकशः उपस्थाप्य तेषां विशेषाः अत्रोपस्थाप्यन्ते-

## उपमा.

साधर्म्यमुपमा भेदे इत्युपमालक्षणं प्रतिपाद्य तस्याः पूर्णा लुप्तेति पूर्वं भेदद्वयं कृतम्। ततश्च पूर्णायाः षड्भेदाः लुप्तायाश्चैकोनविंशतिभेदाः प्रतिपादिताः सन्ति।

यत्रैकस्योपमेयस्य अनेकोपमानानि भवन्ति तत्रोपमायाः मालात्वान्मालोपमाऽलङ्कारो भवति। सा च अभिन्नसाधारणधर्मा भिन्नसाधारणधर्मेति द्विविधा। क्रमशः उदाहरणं च-

**कुमुद्वतीव शीतांशोः केतकीव मनोभुवः।**
**नलिनीव रवेरासीन्मनोज्ञा राधिका हरेः।।**
**सुधाधारेव मधुरा कौमुदीव सुशीतला।**
**कीर्तिर्दीव्यति कृष्णस्य गङ्गेव जनपावनी।।**

अत्र पूर्वत्र मनोज्ञेत्यभिन्नः साधारणो धर्मः, अपरस्मिन् तु मधुरादीनां पृथक् पृथक् धर्मत्वाद् भिन्नधर्मेति प्रथमे उदाहरणे उपमेयभूतायाः राधिकायाः कुमुद्वतीत्याद्यनेकोपमानोपादानात् तथा द्वितीये उदाहरणे कृष्णकीर्तेः सुधाधाराद्यनेकोपमानोपादानान्मालोपमेति।

एवं यथोत्तरमुपमेयस्योपमानत्वे रशनोपमा भवति। साऽपि पूर्ववत् अभिन्नधर्मा भिन्नधर्मा च भवति। यथा-

**यस्य बुद्धिरिवाधीतिरधीतिरिव धीरता।**
**धीरतेव क्रिया गुर्वी विष्णुभक्तिं स विन्दति।।**

इत्यत्राधीत्यादीनामुपमेयानां क्रमशः उत्तरोत्तरमुपमानत्वेन रशनोपमा। सा च गुर्वी इति साधारणधर्मस्यैकत्वादभिन्नधर्मेति। भिन्नधर्मा यथा-

**वपुरिव मधुरं रूपं रूपमिवानन्ददायि गुणवृन्दम्।**
**गुणवृन्दमिव विशुद्धं यशः कृशाङ्गीसमासु तव राधे।।**

मालोपमारशनोपमे तु काव्यप्रकाशेऽप्येवमेव प्रतिपादिते स्तः,किन्तु साहित्यकौमुदीकारेण साहित्यदर्पणवत् उपमायाः एकदेशविवर्तित्वमपि प्रतिपादितमस्ति-

**वाच्ये गम्ये च सा साम्ये एकदेशविवर्तिनी।**

श्रीविद्याभूषणेन अलुप्तधर्मासु विशेषरूपेण बिम्बानुबिम्बोपमा यद्वा असंभाव्योपमानसमुद्भवनाद् अभूतोपमा च प्रतिपादिताऽस्ति। यथा-

**कृष्णः सभार्यो गरुडोपरिस्थितः**
**सूर्योपरिश्लिष्टतडिद्घनो यथा।**
**आधावतोभौमुखान् रिपून् मृधे**
**जघान बाणैररिणा च स क्षणात्।।**

## उत्प्रेक्षा

**संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्।**

अर्थादुपमेयस्योपमानात्मना संभावनम्, उत्कटकोटिके संदेहे सति उत्प्रेक्षेति। सा च स्वरूपगा, हेतुगा, फलगा चेति पूर्वं त्रिविधा। तासु स्वरूपगा उक्तविषया, अनुक्तविषया चेति द्विविधा। हेतुफलोत्प्रेक्षेऽपि सिद्धविषया असिद्धविषया चेति द्वे प्रत्येकं द्विविधे इति सङ्कलनेन षोढा उत्प्रेक्षा।

काव्यप्रकाशे तु एते भेदाः नैव प्रदर्शिताः सन्ति, अपि तु भेदोपभेदं विनैव सामान्येनोदाहृताऽस्त्युत्प्रेक्षेति। साहित्यकौमुद्यां प्रतिपादिताः एते भेदाः, साहित्यदर्पणानुसारमेव प्रतिपादिताः सन्ति।

साहित्यकौमुदीकारस्य मतमस्ति यत् उत्प्रेक्षा रूपकादेरलङ्कारान्तरस्य योगादतिचारुतां भजति। यथा-

**गोवर्धनं गिरिमुपेत्य कटाक्षबाणान्**
**कर्णस्फुरन्मणिशिलोपरिसंक्ष्णुवाना।**
**का भ्रूधनुर्धुवनसूचितलुञ्चनेयं**
**व्यग्रीकरोत्यहह मामपि संभ्रमेण।।**

अत्र कटाक्षबाणान् भ्रूधनुः इत्यत्र च रूपकम्। अस्य रूपकस्य सम्बन्धादुत्प्रेक्षायां समधिकं चारुत्वमिति।

## अप्रस्तुतप्रशंसा

**अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया।**

अर्थाद् यत्राप्रस्तुतस्य वर्णनेन प्रस्तुतार्थस्य प्रतीतिर्जायते तत्राप्रस्तुतप्रशंसाऽलङ्कारो भवति। इयमप्रस्तुतप्रशंसा पञ्चविधा भवति- 1- कार्ये प्रस्तुते अप्रस्तुतस्य कारणस्य कथनम्, 2- कारणे प्रस्तुते अप्रस्तुतस्य कार्यस्य कथनम्, 3- सामान्ये प्रस्तुते अप्रस्तुतस्य विशेषस्य कथनम्, 4- विशेषे प्रस्तुते सामान्यस्य कथनम्, 5- तुल्ये प्रस्तुते तुल्यस्य कथनं चेति।

तुल्यस्याप्रस्तुतस्य वर्णनेन तुल्यस्य प्रस्तुतस्य प्रतीतौ विशेषो यथा तत्राक्षेपे क्वचिद् श्लेषः, क्वचिच्च समासोक्तिः, क्वचित् सादृश्यमात्रं हेतुरिति तत्र त्रैविध्यं भवति। क्रमशः उदाहरणं यथा-

**त्यजन्कुवलयाधिकां घनरसश्रियोल्लासिनीं**
**पुरः सुरतरङ्गिणीं मधुरमत्तहंसस्वनाम्।**
**मलीमसपयोधरामपि मदान्धपद्भिन्निमां**
**भजन् किमिव पङ्किलामहह कर्मनाशामसि।।**

अत्र नायिका प्रस्तुता नदी चाप्रस्तुतेति नदीवर्णनेन नायिकाप्रतीतिर्जायत इति तुल्यात्तुल्यप्रतीतिः, कुवलयपयोधरादिशब्दानां श्लिष्टत्वादर्थद्वयप्रतीतिरिति श्लेषोन्यार्थाकारणम्। समोक्तिच्छायाया उदाहरणं यथा-

**किं चातकीरपि रसस्पृहयैकताना**
**वर्षन्तमम्बुदमपि स्ववशे नयन्ती।**
**वात्ये विधाय दृगगोचरमेव तासां**
**छन्नेन राजसि रजोभिरनेन कामम्।।**

अत्र गोपीनां प्रस्तावे चातकीनामुक्तिरिति तुल्यात्तुल्यत्वे समासोक्तिच्छाया विशेषणसामर्थ्यात् हेतुरिति। सादृश्यमात्रच्छायाया उदाहरणम् यथा-

**चन्द्रिकां चन्द्रलेखायाश्चकोरे पातुमुद्यते।**
**पिधानं विदधे सद्यः शरददम्भोधरावली।।**

अत्र गान्धर्विका- कृष्णजरतीप्रस्तावे चन्द्रिकाचकोर- शरदम्भोधरावलीनामुक्तिः, तत्र च सादृश्यमात्रं कारणमिति। क्वचिच्च ज्ञाप्यस्य वाच्ये आरोपात् क्वचिदनारोपादपीदं दृश्यते।

एते निदर्शनार्थमुपस्थापिताः। एवमेवान्येऽपि सन्ति। प्रायः सर्वेषामेवैषामर्थालङ्काराणां प्रतिपादनं काव्यप्रकाशमनुसरति। प्रतिपादनसरणिस्तु तथैवास्ति केवलमुदाहरणेष्वेव भेदो दृश्यते।

**परिशिष्टा अलङ्काराः**

दशमे परिच्छेदे भरतोक्तानामर्थालङ्काराणां प्रतिपादनं कृत्वा एकादशे परिच्छेदे तेषां शब्दालङ्काराणाम् अर्थालङ्काराणाञ्च प्रतिपादनं कृतमस्ति-

इह भरतोक्तेभ्यः केचन परिशिष्टाः प्रदर्श्यन्ते। एते च ते परिशिष्टाः- 1- भाषासमकः, 2- प्रहेलिका, 3- उल्लेखः, 4- निश्चयः, 5- हेतुः, 6- अनुकूलम्, 7- विचित्रम्, 8- विकल्पः, 9- अर्थापत्तिः, 10- परिकराङ्कुरः, 11- मिथ्यावसितिः, 12- परिणामः, 13- अनुज्ञा, 14- अनुगुणश्चेति चतुर्दशसंख्याकाः सन्ति। एतेषु भाषासमकः प्रहेलिकेति च शब्दालङ्कारौ अन्ये चार्थालङ्कारा इति।

**भाषासमकः**

यत्रैकविधैः शब्दैः विविधासु भाषासु समानं वाक्यं जायते तत्र भाषासमकोऽलङ्कारो भवति-

**शब्दैरेकविधैरेव भाषासु विविधास्वपि।**
**वाक्यं यत्र भवेत् सोऽयं भाषसमक उच्यते।।**

उदाहरणम् यथा-

**मञ्जुलमणिमञ्जीरे कलगम्भीरे विहारसरसीतीरे।**
**विरसासि केलिकीरे किमालि धीरे च गन्धसारसमीरे।।**

श्लोकोऽयं विविधासु, संस्कृत-प्राकृत-सौरसेनी प्राच्यान्वतीनागरापभ्रंशेषु भाषासु समान एवास्ति। अत एव विविधभाषानां समानत्वात् भाषासमक इत्युच्यते। अस्य प्रतिपादनं तु साहित्यदर्पणवत् कृतमस्ति। साहित्यदर्पणेऽप्यं यथावत् दृश्यते।

**प्रहेलिका**

यद्यपि प्रहेलिका रसविरोधिन्यस्ति अतो नास्या अलङ्कारता, अलङ्कारस्य रसोपकारकत्वात्। यथोक्तं साहित्यदर्पणे-

**रसस्य परिपन्थित्वान्नालङ्कारो प्रहेलिका।**[39]

अस्याः प्रहेलिकाया अनेके भेदाः भवितुमर्हन्ति बिन्दुच्युतकमात्राच्युतक- वर्ण-च्युतकादिभेदेनानेकविधा। च्युतदत्ताक्षरमप्यस्यालङ्कारस्यैको भेदः। अस्योदाहरणं तु-

**कूजन्ति कोकिलाः साले यौवने फुल्लमम्बुजम्।**
**किं करोतु कुरङ्गाक्षी वदनेन निपीडिता॥**

अत्र रसाले इति वक्तव्ये साले इति रकारश्च्युतः, वने इति वक्तव्ये यौवने इत्यत्र यौ दत्तम्। एवमेव मदनेन इति वक्तव्ये वदनेन इति मकारश्च्युतः, वकारो दत्त इति।

क्रियागुप्तिः कर्मगुप्तिः कर्तृगुप्तिश्चेत्यादयोऽप्यस्य भेदा निरूपिताः सन्ति।

## उल्लेखः

उल्लेखस्तु प्रसिद्धोऽस्त्यलङ्कारः कुवलयानन्दसाहित्यदर्पणादिषु प्रायः सर्वत्रास्य प्रतिपादनमस्ति। यत्रैकस्य वर्णनीयस्यानेकधा उल्लेखो भवति तत्रोल्लेखनामकोऽलङ्कार इति-

**एकस्य बहुधोल्लेखादुल्लेखं कवयो विदुः**

## निश्चयः

यत्रोपमानं प्रतिषिध्य प्रकृतस्य स्थापनं क्रियते तत्र निश्चयो भवति। यथा-

**प्रकृते स्थापितेऽन्यस्मिन्प्रतिषिद्धे च निश्चयः।**

अलङ्कारोऽयमपह्नुतेः विपरीतोऽस्ति। अपह्नुतौ प्रकृतस्य निषेधः, अन्यस्य (अप्रकृतस्य) च स्थापनं भवति, किन्त्वत्रान्यस्यैव निषेधः वर्णनीयस्य च प्रकृतस्य स्थापनमिति निश्चयोऽसौ। उदाहरणं यथा-

**नासौ नन्दसुतो देवि तापिच्छोऽयं निभाल्यताम्।**

## हेतुः

यत्र कार्यमुखेन कारणस्याभिधानं तत्र हेत्वलङ्कारो भवति। यथा-

**अद्रीणां विद्रुतिः साक्षादाकृष्टिर्व्रजसुभ्रुवाम्।**
**स्थैर्यं स्रोतस्विनीनां तु जीयाद्वंशीध्वनिर्विभोः॥**

अत्र अद्रिविद्रुत्यादौ वंशीध्वनिः हेतुरिति।

## अनुकूलम्

यदि प्रातिकूल्यात् कथञ्चिदानुकूल्यं भवेत्तदा अनुकूलं नामालङ्कार इति

**अनुकूलं प्रातिकूल्यादानुकूल्यं भवेद्यदि।**

उदाहरणं यथा-

**प्राणापहारं हरिरप्रियं द्विषां मखापहारं च बलाच्छचीपतेः।**
**स्थानापहारं फणिनश्चकार यत्तेनैव तेषामभवत्सुमङ्गलम्॥**

## विचित्रम्

इष्टलाभाय यत्र तद्विरुद्धं विचेष्टितं वर्णितं भवति तत्र विचित्रं नामालङ्कारो भवति-

**विचित्रं क्लिष्टलाभाय तद्विरुद्धं विचेष्टितम्।।**

यथा-

**प्रणमत्युन्नतिहेतोर्जीवनहेतोर्विमुञ्चति प्राणान्।**

**दुःखीयति सुखहेतोः को मूढः सेवकादन्यः।।**

**विकल्पः**

तुल्यबलयोः कयोश्चित् चमत्कारसम्पन्ने विरोधे वर्णिते सति विकल्पो भवति-

**विरोधे तुल्यबलयोर्विकल्पश्चारुताजुषि।**

यथा-

**सद्यः शिरांसि चापान्वा नमयन्ति महीभुजः।**

यथा वा-

**युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः।**

**अर्थापत्तिः**

यत्र दण्डापूपिकन्यायेनान्यार्थस्यागमो भवेत् तत्र अर्थापत्तिरलङ्कारः-

**दण्डापूपिकन्यायार्थागमोऽर्थापत्तिरिष्यते।**

यथा-

**हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले।**

**मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः।।**

**परिकराङ्कुरः**

विशेषणस्य साभिप्रायत्वे परिकरालङ्कारः दशमे परिच्छेदे वर्णितोऽस्ति। यत्र तु विशेष्यस्य साभिप्रायत्वं भवति तत्र परिकराङ्कुर इति-

**साभिप्रायं विशेष्यं चेद्भवेत्परिकराङ्कुरः।।**

**मिथ्याध्यसितिः**

यत्र मिथ्यासिद्ध्यै मिथ्यार्थस्य निर्मितिः भवति तत्र मिथ्याध्यसितिः नामालङ्कारः। यथा-

**गोविन्दचरणद्वन्द्वं मायावादविशारदः।**

**लभते सच्चिदानन्दं स्वपुष्पस्तवकं वहन्।।**

**अनुज्ञा**

गुणस्य वीक्षणात् तत्रैव दोषस्य प्रार्थना यत्र वर्णिता भवति तत्रानुज्ञालङ्कार इति-

**दोषस्य प्रार्थनाऽनुज्ञा तत्रैव गुणवीक्षणात्।**

यथा-

**विपदः सन्तु नः शश्वत्तत्र तत्र जगद्गुरो।**

**भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम्।।**

**अनुगुणः**

यत्र परेषां सान्निध्यात् प्राक्प्रसिद्धानां गुणानामुत्कर्षो वर्णितो भवति तत्रानुगुणो नामालङ्कार इति-

**प्राक्प्रसिद्धगुणोत्कर्षोऽ नुगुणः परसन्निधेः।।**

यथा-

**राधाकुङ्कुमपीताङ्गी हरिपीतपटाञ्चिता।**
**धत्ते द्विगुणितां प्रातः पीततां पश्यतालयः।।**

**परिणामः**

यत्र उपमानमुपमेयात्मना परिणतं सत् क्रियार्थोपयोगि भवति तत्र परिणामालङ्कारो भवति-

**परिणामः क्रियार्थश्चेदारोप्यो विषयात्मना।।**

यथा-

**सा राधिका स्मरपतत्रिवशावशाङ्गी**
**फुल्लेन नेत्रकमलेन ददर्श कृष्णम्।।**

इत्यादि। अत्र कमलस्योपमानस्य नेत्रत्वेन उपमेयात्मना परिणतावेव तस्य दर्शनक्रियायामुपयोग इति।

अयं परिणामालङ्कारः रूपकस्य साक्षाद् विपरीत इति। यतो हि रूपके उपमेये उपमानस्यारोपो भवति। आरोपस्तु तदात्मना प्रतीतिरिति मुखं चन्द्रः इत्यादौ मुखस्य नहि मुखत्वेन रूपेण प्रतीतिरपि तु चन्द्रत्वेन रूपेणेति। एवं रूपके उपमेये उपमानाभेदः प्रतीयते, परिणामे तु उपमाने उपमेयाभेदः इत्युभयोर्भेदः। यथोक्तं नागेशभट्टेन-उपमान-प्रतियोगिकाभेदो रूपकम्, उपमेयप्रतियोगिकाभेदः परिणामः।

काव्यप्रकाशे परिणामालङ्कारो नास्ति विवेचितः। यतो हि-तद्रूपकमभेदो य उपमानोपमेययोः इति रूपकलक्षणे उपमानोपमेययोः इत्यनेन उपमाने उपमेयस्याभेदः, उपमेये उपमानस्याभेदः इति द्वयोरपि रूपकत्वस्य सामान्यरूपेणाङ्गीकारात्।

साहित्यकौमुदीकारस्तु उपमेये उपमानस्याभेदे पृथक् चमत्कारः, उपमाने उपमेयस्याभेदे तु पृथगिति चमत्कारभेदमादाय पूर्वत्र रूपकं दशमे परिच्छेदे उत्तरत्र तु परिणामः परिशिष्टेष्वलङ्कारेषु लक्षितःवानिति।।

## सन्दर्भ-सूची

1. नाट्यशास्त्रम् 17।94.
2. ना०शा०- 17.
3. काव्यादर्शः- 2।1-3.
4. काव्यालङ्कारसूत्रवृत्तिः - 3/1/1.
5. का०सू० वृ० - 3।1

6. का0सू0 वृ0- 3।1-2
7. ध्वन्यालोकः - 3/1.
8. काव्यप्रकाशः - 8/66.
9. साहित्यकौमुदी- परि0 8.
10. साहित्यकौमुदी- परि0 8.
11. नाट्यशास्त्रम्- 17/95.
12. काव्यादर्शः - 1/41.
13. का0सू0 वृ0- 3/1/4
14. का0सू0 वृ0- 3/2/1.
15. काव्यप्रकाशः - 8/89.
16. साहित्यदर्पणः - 8/1.
17. साहित्यकौमुदी- परि0 8.
18. साहित्यकौमुदी- परि0 8/8.
19. साहित्यकौमुदी- परि0 8.
20. तत्रैव.
21. तत्रैव.
22. तत्रैव.
23. साहित्यकौमुदी- परि0 8.
24. का0सू0 वृ0- 1/1/2.
25. साहित्यदर्पणः - 1.
26. अग्नि0पु0- 334/2.
27. काव्यालङ्कारः, भामहः
28. अलङ्कारचन्द्रिका, वैद्यनाथः, पृ0-2.
29. काव्यप्रकाशः, 8/2.
30. साहित्यकौमुदी- परि0 8.
31. मम्मटभट्ट-पण्डितराजजगन्नाथयोर्मतभेद-विमर्शः, पृ0 274.
32. साहित्यदर्पणः - 10/1.
33. साहित्यदर्पणः - 10/1.
34. साहित्यकौमुदी- परि0 9.
35. साहित्यकौमुदी- परि0 9.
36. काव्यप्रकाशः, वामनी, पृ0 491.
37. साहित्यकौमुदी- परि0 9.
38. काव्यादर्शः - 2/1.
39. साहित्यदर्पणः - 10.



# उपसंहारः

बिहारप्रान्तनिवासिना बलदेव इति नामकेन ततश्च विद्याप्राबल्यात विद्याभूषणेत्युपाधिविभूषितेन श्रीबलदेवविद्याभूषणेन विरचितोऽयं साहित्य-कौमुदीनामको ग्रन्थः, वस्तुतः काव्यप्रकाशकारिकामादाय कृतोऽपि शास्त्रान्तरशास्त्रार्थजाटिल्यरहितः, भरतसूत्रवृत्तित्वेन प्रतिपरिच्छेदं ज्ञापितः, अस्ति काव्यशास्त्रग्रन्थेष्वन्यतमः।

अत्र- 1- यशःप्राप्तिः, 2- अर्थप्राप्तिः, 3- व्यवहारज्ञानम्, 4- शिवेतरक्षतिः, 5- सद्यः परनिर्वृत्तिः, 6- कान्तासमिततयोपदेशश्चेति षट्प्रयोजनानि काव्यस्य प्रतिपादितानि सन्ति। तेषु षट्स्वपि सकलप्रयोजनमौलिभूतमस्ति सद्यः परिनिर्वृतिरिति। शक्तिनिपुणताऽभ्यासादीनां त्रयाणामपि काव्यं प्रति समुदितायां कारणतायां सत्यामपि केवलापि प्रतिभा काव्यं प्रति हेतुरिति। काव्यस्वरूपे शब्दार्थयोः साहित्यम् काव्यत्वेनाङ्गी-कृतमिति, शब्दार्थयोः प्राधान्यम्, अप्राधान्यञ्चेति द्विविधेऽपि पक्षेऽयं शब्दार्थयोरप्राधान्यं व्यञ्जनायाश्च प्राधान्यमङ्गीकरोति।

शब्दार्थवृत्तिविचारे वाचकशब्दानामभिधया वाच्यार्थप्रतिपादकानां यौगिकः, रूढः, योगरूढश्चेति त्रैविध्यं प्रतिपादितमस्ति। वाच्यार्थनिरूपणे वाक्यार्थप्रतिपादिका तात्पर्यावृत्तिरपि निरूपिताऽस्ति। वस्तुतोऽर्थवृत्तिरपि लक्षणा मुख्यार्थबाधादित्रयसमपेक्षितस्वरूपा लाक्षणिकशब्दसाहाय्येन लक्ष्यार्थप्रतिपादिकाऽनेकविधोऽपि काव्यशास्त्रोपयोगिताया षड्विधेति प्रतिपादिताऽस्ति ग्रन्थकारेण। महाकवीनां परमरहस्यभूता व्यञ्जना शाब्दी चार्थीति भेदद्वयेन रूपेण प्रतिपादिताऽस्ति।

काव्यभेदेषु उत्तमं ध्वनिकाव्यम्, मध्यमं गुणीभूतव्यङ्ग्यम्, अधममवरञ्चेति त्रयो भेदाः स्वीकृताः सन्ति। त्रयोऽपि काव्यभेदाः पूर्ववत् काव्यप्रकाशानुरूपमेव विवेचिताः सन्ति तत्र किमपि नावीन्यं नास्ति। केवलमयंलक्ष्यंक्रमव्यङ्ग्यप्रतिपादनावसरे शृङ्गारहास्यकरूणरौद्रवीरभयानकबीभत्साद्भुतशान्तानामतिरिक्ताः दास्य- सख्य- वात्सल्याख्यास्त्रयोऽन्येऽपि रसाः स्वीकरणीया इति नवीनं प्रतिपादितमस्ति।

दोषेषु पददोष- पदांशदोष- वाक्यदोषार्थदोषरसदोष इति पञ्चविधानां दोषाणां निरूपणं यथापूर्वाचार्यप्रतिपादितं कृतमस्ति।

गुणेषु प्राचीनाभिमता दशशब्दगुणाः दशार्थगुणाश्च खण्डितास्तथा च माधुर्यौजः प्रसादाख्यास्त्रय एव सिद्धान्तिताः सन्ति।

शब्दपरिवृत्त्यसहत्वलक्षणेषु शब्दालङ्कारेषु वक्रोक्तिः, अनुप्रासः, यमकम्, श्लेषः, चित्रम्, पुनरुक्तवदाभासः इति षडलङ्काराः प्रतिपादिताः। अर्थालङ्कारेषु संसृष्टिसङ्कारालङ्कारा-वादा-यैकषष्टिसंख्याका अलङ्काराः काव्यप्रकाशनिरूपिताः विवेचिताः सन्ति। ग्रन्थस्यैकादशे परिच्छेदे परिशिष्टाः केचन अलङ्काराः निरूपिताः। ते च भाषसमक-प्रहेलिकेति द्वौ शब्दालङ्कारौ, उल्लेख-निश्चय-हेतु-विचित्रानुकूल- विकल्पार्थापत्ति परिकराङ्कुरमिथ्या-ध्यवसिति- परिणामानुज्ञाऽनुगणा इति द्वादशार्थालङ्काराः सोदाहरणं निरूपिताः।

ग्रन्थोऽयं काव्यप्रकाशानुसारी तथा च साहित्यदर्पण- कुवलयानन्दादिप्रभावित इति दृश्यते। एवमस्य साहित्यशास्त्रे महानुपयोगः, निबन्धस्यास्य सामाजिकोपादेयत्वं च सिद्धम्- इति।।



# प्रथमः परिच्छेदः

**कारुण्याद्व्रजपतिराशु यस्य भेजे**
**निर्धूताखिलवृजिनः परं प्रमोदम्।**
**चैतन्याकृतिमजितं जितं स्वभक्ते-**
**स्तं वन्दे मधुरिमसागरं मुरारिम्॥**
**सूत्राणां भरतमुनीशवर्णितानां**
**वृत्तीनां मितवपुषां कृतौ ममास्याम्।**
**लक्ष्याणां हरिगुणशालिनां च सत्त्वा-**
**त्कुर्वन्तु प्रगुणधियो च सावधानम्॥**

निष्प्रत्यूहप्रारिप्सितपरिसमाप्तिकामो मुनिः समुचितां गीर्देवीं प्राक् प्रणमति-

**नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।**
**नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति॥1॥**

अत्र विधिकृतविलक्षण-विश्वविधानाज्जयतीति नतिमाक्षिप्य तां प्रति प्रणतोऽस्मीति व्यज्यते। प्रेक्षावत्प्रवृत्तये शास्त्राभिधेयफलं तावदाह-

**काव्यं यशसे ऽर्थकृते व्यवहारविदे शिवेतरक्षतये।**
**सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे॥2॥**

कीर्तिर्धनप्राप्तिर्देवमनुष्यादिव्यवहारावगतिर्देवतावन्दनकृतः क्लेशनाशः सपद्येव रसानुभवसमुद्भूतः परमानन्दः सरसतया धर्मादिरूपहितोपदेशश्च काव्यादेव भवतीति सर्वथा तत्र प्रयतनीयम्। वेदः खलु शब्दप्राधान्यात् प्रभुसम्मितः। पुराणादिश्चार्थप्राधान्या-त्सुहृत्संम्मितः शास्ति।

काव्यं तु शब्दार्थयोर्गुणतया रसाङ्गभूत-व्यापार-प्रावण्यात्तद्विलक्षणमतः कान्तासंमितं तदिति। तस्य हेतुमाह-

**शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।**
**काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे॥3॥**

शक्त्यादित्रयं काव्यकारणमित्यर्थः। तत्र शक्तिः प्राक्तनसंस्कारविशेषः

काव्योत्पादकस्वादैकहेतुः। यां विना काव्यं नोदयति, उदितो वोपहासाय। लोकः स्थावरजंगमात्मकलोकवृत्तम्। शास्त्रंच्छन्दोव्याकरणादि। काव्यं महाकविकृतम्। आदिशब्ददितिहासादि च। तेषां परामर्शाद्व्युत्पत्तिः। काव्यज्ञाः काव्यनिर्माणविचारणचतुरास्तदुपदेशेन निर्माणे योजने च पुनः पुनः प्रवृत्तिरिति त्रिकं समुदितमेव हेतुरित्येके? डिम्भेनापि काव्योत्पादनाच्छक्तिरेव केवलेत्यपरे। तस्य स्वरूपमाह-

**तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि**

दोषशून्यं सगुणं सालंकारं शब्दार्थयुगलं तत्काव्यम्। अदोषाविति। यावद्दोषराहित्यं स्फुटदोषराहित्यं रसापकर्षैकदोषराहित्यं वा नञर्थः। अनलंकृती क्वापीति स्फुटालंकारविरहेऽपि न काव्यत्वहानिः। यथा-

**प्रियः सोऽयं कृष्णः सहचरि कुरुक्षेत्रमिलित-**
**स्तथाहं सा राधा तदिदमुभयोः सङ्गमसुखम्।**
**तथाप्यन्तःखेलन्मधुरमुरलीपञ्चमजुषे**
**मनो मे कालिन्दीपुलिनविपिनाय स्पृहयति।।**

अत्र न कश्चिदलंकारः स्फुटः, रसस्तु प्राधान्यादलङ्कार्य इति वक्ष्यते। न चात्र विभावना विशेषोक्तिर्वा स्फुटा, निषेधमुखेनानुपादानात्। तद्भेदानाह-

**इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः।।4।।**

इदं काव्यं वाच्याद् व्यङ्ग्ये इति चमत्कारिणि सत्युत्तमम्। तदेतदुत्तमं काव्यं ध्वन्यतेऽस्मिन्निति व्युत्पत्त्या बुधैर्ध्वनिरित्यभिधीयते। यथा-

**मुक्तावली निशिमया दयिता कदम्ब-**
**वाटी-कुटीर- कुहरे सखि विस्मृतास्ति।**
**तामाहरेति वृषभानुजया नियुक्ता**
**तां प्रोझ्य किं शशिकले गृहमागतासि।।**

अत्र कृष्णाङ्गसङ्गानुभवायैव तथा त्वं प्रतार्य प्रेषिता न पुनर्मौक्तिकहाराहरणाय। यन्नखाङ्कशशिकलाञ्छितवक्षोजकुम्भः समागतासीति व्यङ्ग्यस्य वाच्यादतिचारुत्वादुत्तममिदं काव्यम्।

**अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्।।**

वाच्यादचारुणि व्यङ्ग्ये तदिदं मध्यमं काव्यम् गुणीभूतव्यङ्ग्यमित्याभिधीयते। यथा-

**कर्णकल्पितरसालमञ्जरीपिञ्जरीकृतकपोलमण्डलः।**
**निष्पतन्नयनवारिधारया राधया मधुरिपुर्निरीक्ष्यते।।**

अत्र रसालवाटीकृतसंकेता तत्राहं न गतेति व्यङ्ग्यं गुणीभूतं तदपेक्षया वाच्यस्यैव चारुत्वात्।

**शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्॥5॥**

स्फुटव्यंग्यरहितं तदिदमवरं काव्यं चित्रमित्यभिधीयते। तच्च शब्दचित्रमर्थचित्रमिति द्विविधम्। क्रमेणोदाहरणम्-

**उर्जत्स्फूर्जद्गर्जनैर्वारिवाहाः प्रोद्यद्विद्युद्दामविद्योतिताशा**
**अद्रावद्रौ विद्रुताद्राघयन्ते दन्तिभ्रान्त्या सिंहसंघप्रकोपान् ॥**
**कदम्बमाला कलिता कं सहर्षं न कुर्वती।**
**कृष्णमूर्तिरिवाभाति कालिकी काननस्थली॥**

अनयोरनुप्रासनिबन्धः शब्दसाम्योपमा च क्रमात्स्वादाय कल्पते, न तु किंचिद् व्यङ्ग्यं प्रसरति ततः कनिष्ठमेतत्।

**इति भरतसूत्रवृत्तौ साहित्यकौमुद्यां काव्यप्रयोजनहेतुस्वरूप-विशेषनिर्णयो नाम प्रथमपरिच्छेदः।**



# द्वितीयः परिच्छेदः

शब्दार्थौ काव्यमित्युक्तं तयोः क्रमेण स्वरूपमाह-

**स्याद् वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा॥**

अत्र काव्ये शब्दस्त्रिधा। उपाधित्रैविध्यादेव। स्वरूपमेषां वक्ष्यते-

**वाच्यादयस्तदर्थाः स्युः॥**

तेषां वाचकादीनामर्थाः क्रमाद् वाच्य- लक्ष्य- व्यंग्याः स्युः।

**तात्पर्यार्थोऽपि केषुचित् ॥1॥**

षष्ठ्यर्थे सप्तमी। केषाञ्चिन्मते वाक्यार्थस्तात्पर्याख्यवृत्तिगम्यः। एकैक-पदार्थबोधनेनाभिधाया विरतत्वात्क्यार्थस्वरूपस्य पदार्थानामन्वयबोधनाय तात्पर्यनाम्नी वृत्तिः। तदर्थस्तात्पर्यार्थः। तद्बोधकं तु वाक्यमित्यभिहितान्वयवादिनः।

अर्थस्यापि व्यञ्जकतामाह-

**सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते।**

प्रायशो वक्त्रादिवैशिष्ट्ये सतीत्यर्थः। तत्र वाच्यस्य यथा-

**मधुरिता मधुना विधुनाप्यसौ**
**सखि पतङ्गसुता पुलिनाटवी।**
**स वयसा वयसा च विभूषिता**
**तनुरियं किमिह क्षममुच्यताम्॥**

अत्र तथाभूता पुलिनाटवी तरुणतमालेनेव, यत्तनुश्च महेन्द्रमणिनेव, येन राजिष्यते, तं कृष्णं त्वरितमाहर यदि चातुर्यं बिभर्षीति वाच्योऽर्थो व्यञ्जयति।

लक्ष्यस्य यथा-

**साधयन्त्यनुलवं प्रियं हरिं मत्कृते श्रममाप यत्सखी।**
**तच्चकार चरितं हितैषिणी बन्धुराङ्गि करणीयमुच्चकैः॥**

अत्र स्वसुखतात्पर्यान्मत्कान्तं रमयन्ती त्वं शत्रुत्वं कृतवतीति लक्ष्योऽर्थः कान्ते सापराधत्वप्रकाशनं व्यञ्जयति।

व्यंग्यस्य यथा-

**नाक्षिणीं क्षिप कुरङ्गि सर्वतः साक्षिणी भव सखीभिरन्विता।**
**माधवः किल दुनोति मामसौ साधवः शृणुत भोः शिखण्डिनः॥**

अत्र निर्जनोऽयं देश इति व्यङ्ग्योऽर्थः। स्वच्छन्दमिह मया सह विहरेति व्यञ्जयति। वाचकादीनां क्रमात्स्वरूपमाह-

**साक्षात्संकेतितं योऽर्थमभिधत्ते स वाचकः॥2॥**

यस्य शब्दस्य यत्राव्यवधानेन संकेतो गृह्यते स तस्यार्थस्य वाचकः संकेतश्चास्माच्छब्दादयमर्थो बोध्य इतीश्वरेच्छा। तद्ग्रहस्तु वृद्धव्यवहारादितः। तथा हि- प्रयोजकवृद्धेन गामानय इत्युक्ते प्रयोज्यवृद्धे सास्नादिमन्तमर्थस्थानात्स्थानान्तरं नयति सति पार्श्वस्थः शिशुः अनेनास्माच्छब्दादेवंविधोऽर्थो ज्ञातः इति प्रथमं प्रतिपद्यते। ततश्च गां नयाश्वमानय इति तेनोक्ते तस्मिंस्तथा तथा प्रवृत्ते तस्य तस्य शब्दस्य तत्र तत्रास्ति कश्चन संबन्धः इति निश्चिनोति। आदिशब्दाद्व्याकरणकोशाप्तवाक्यादेः।

स चार्थः क इत्याह-

**संकेतितश्चतुर्भेदो जात्यादिर्जातिरेव वा॥**

जातिगुणक्रियासंज्ञारूपश्चतुर्विधोऽर्थः संकेतितः। तत्र जातिर्गुणश्च सिद्धरूपो वस्तुधर्मः। पदार्थव्यवहारयोग्यतानिर्वाहिका गोपिंण्डादिषु गोत्वादिका जातिः।

विशेषाधानहेतुर्गुणः। शुक्लादयो हि गवादीन्सजातीयेभ्यो नीलगवादिभ्यो व्यावर्तयन्ति। क्रिया पूर्वापरीभूतावयवा पाकादिः साध्यरूपो वस्तु-धर्मः। संज्ञा तु डित्थादिद्रव्येषु वक्त्रा यदृच्छया संनिवेशितं डित्थादिशब्दस्वरूपमेव। एकव्यक्तिवाचकः सेत्यन्ये।

एष्वेव वक्त्रादिषु गौः शुक्लः पाचको डित्थः इत्यादेश्चतुर्विधस्य शब्दस्य क्रमात्संकेतः। न चोपाधिष्वर्थक्रियाकारितानुपपत्तिः। तैर्व्यक्त्याक्षेपात्। न चैवं व्यक्तिष्वेव संकेतोऽस्त्विति वाच्यम्। आनन्त्यव्यभिचारदोषापत्तेः। गुणादीनामप्येकव्यक्तित्वान्न किंचिदनवद्यम्। तेषां भेदावभासस्त्वाश्रयभेदादेव, न तु स्वतः। मणिदर्पणादिभेदान्मुखभेदवत्।

अथवा सर्वत्र जातिरेव संकेतगोचरः। चन्द्रचन्दनशंखादिषु अयं शुक्लोऽयं शुक्लः इत्यादि प्रतीत्या विशेषाच्छुक्लत्वादि, गुडतण्डुलतैलपाकादिषु अयं पाकोऽयं पाकः इति पाकत्वम्, बालवृद्धशुकाद्युक्तेषु डित्त्थादिषु डित्त्थोऽयम् इति डित्त्थदित्वमिति सर्वत्र तदवगाहात्। चतुर्विधानां गवादिशब्दानां जात्यादिचतुष्कं क्रमात्प्रवृत्तिनिमित्तम्, जातिरेव वा सर्वेषां तेषामिति ह्यर्थः।

वाचकस्योपाधिमाह-

**स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते॥3॥**

स साक्षात्संकेतितो जात्यादिर्मुख्योऽर्थस्तत्रास्य शब्दस्य मुख्यो व्यापारो वृत्तिरभिधोच्यते। इदमत्र बोध्यम्- वाचकः शब्दस्त्रिधाः यौगिको रूढो योगरूढश्चेति।

यत्रावयवार्थ एव बुध्यते स यौगिकः। यथा- पाचकादितः।

यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण बोधः स रूढः। यथा- गोमण्डपादिः। इह गमनं मण्डपानकर्तृत्वरूपं योगार्थं विनैव व्यक्तिविशेषगृहविशेषयोरवगमः।

यत्र त्ववयवशक्ति- विषये समुदायशक्तिरप्यस्ति स योगरूढः। यथा पङ्कज-वक्षोजादिः। पङ्कजशब्दो ह्यवयवशक्त्या पङ्कजनिकर्तृरूपमर्थं बोधयति, समुदायशक्त्या तु पद्मत्वेन रूपेण पद्ममिति योगार्थसत्त्वेऽपि व्यक्तिविशेषबोधनाद्योगरूढ एवासाविति।

लाक्षणिकनिरूपणाय तदुपाधिमाह-

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया।।4।।**

कलिङ्गः साहसिकः इत्यादौ देशविशेषादिरूपार्थानां साहसाद्यसंभवात्, गङ्गायां घोषः प्रतिवसति इत्यादौ प्रवाहादिरूपार्थानां घोषाधारत्वाद्यसंभवाच्च मुख्यार्थबाधायामाधारा-धेयभावादौ सामीप्यादौ च सम्बन्धे रूढेः प्रयोजनाच्च हेतोर्मुख्येनामुख्योऽ न्योऽ र्थो यया लक्ष्यते सा लक्षणा नाम क्रियावृत्तिरर्थनिष्ठाप्यर्पिता शब्दे। तत्र रूढ़िः प्रसिद्धिस्तामनुसृत्य तत्संयुक्तपुरुषादिरन्योऽर्थः पूर्वत्र लक्ष्यते। परत्र तु गंगागतशैत्यपावनत्वादेस्तटादौ प्रातिपादनं प्रयोजनं तमुद्दिश्य तटादिरन्योऽर्थः। सा चेयं जहत्स्वार्था। कुन्ताःप्रविशन्ति इत्यादावजहत्स्वार्था कुन्तधारिसहितप्रवेशात्। छत्रिणो गच्छन्ति इति छत्रिपदस्यैकसार्थवाहित्वे लक्षणा। तत्त्वेन रूपेण छत्रितदन्ययोर्बोधात्। काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्य दध्युपघातकेषु लक्षणा। तेन तन्मात्रस्य बोधनात्। सोऽयं देवदत्तः इत्यादौ जहदजहत्स्वार्था।। अत्र तत्कालैतत्कालयोस्त्यागाज्जहत्स्वार्था च। कुन्ताःप्रविशन्ति इत्यादावजहत्स्वार्था कुन्तधारिसहितप्रवेशात्। छत्रिणो गच्छन्ति इति छत्रिपदस्यैकसार्थवाहित्वे लक्षणा। तत्त्वेन रूपेण छत्रितदन्ययोर्बोधात्। काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्य दध्युपघातकेषु लक्षणा। तेन तन्मात्रस्य बोधनात्। सोऽयं देवदत्तः इत्यादौ जहदजहत्स्वार्था।। अत्र तत्कालैतत्कालयोस्त्यागाज्जहत्स्वार्था। पिण्डमात्रस्यात्यागादजहत्स्वार्था च। एवं रथो गच्छति इत्यादौ च। इयमेव भागलक्षणोच्यते।

अथ प्रयोजनवती विभज्यते-

**स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्।**
**उपादानं लक्षणं चेत्युक्तंशुद्धैव सा द्विधा।।5।।**

कुन्ताः प्रविशन्तीत्यादौ कुन्तादिभिः स्वप्रवेशसिद्धये स्वसम्बन्धिनः पुरुषाः उपस्थाप्यन्ते। एवं वेणुर्गायतीत्यत्र वेणुना स्वगीतिसिद्धये स्ववादकस्य हरेराक्षेपः। मुख्यार्थस्याप्यत्रोपादानादियमुपादानलक्षणा, कुन्तादीनामतिगहनत्वादिफलम्।

यत्रत्वविनाभावोऽर्थापत्तिर्वा तत्र नेयं लक्षणा रूढिफलयोरभावात्। यथा-

गौरबुन्ध्यः इति श्रुतिचोदितमनुबन्धनं मे कथं स्यादिति जात्या व्यक्तिराक्षिप्यते विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे इत्युक्तेः न तु शब्देनोच्यते। एवं क्रियतामित्यत्र कर्ता, कुर्वित्यत्र कर्म, प्रविश पिण्डीमित्यादौ गृहं भुंक्ष्वेत्यादि च। अविनाभावो ह्याक्षेपः पीनो देवदत्तो दिवा न भुंक्ते इत्यत्र रात्रिभोजनमर्थापत्त्यैव लभ्यते, न तु लक्ष्यते। असिध्यर्थदृष्ट्या साधकान्यार्थकल्पनं ह्यर्थापत्तिः।

गङ्गायां घोषः मञ्चाः क्रोशन्तीत्यादौ तटादीनां घोषाधारत्वादिसिद्धये गङ्गादिशब्दाः स्वार्थं तत्रार्पयन्तीतिपरोपलक्षणादेषा लक्षणलक्षणा। द्विधा चेयम् शुद्धैव, उपचारेण. मिश्रत्वात्। सादृश्येन सम्बन्धेन प्रवृत्तिर्भेदेनप्रतीतयोरैक्यारोपो वोपचारः।

**सारोपान्या तु यत्रोक्तौ विषयी विषयस्तथा।**

यत्र आरोप्यमाण आरोपविषयश्च स्फुटः सा लक्षणा सारोपा नाम। यथा गौर्वाहीक इत्यादौ। इह गौरारोप्यमाणः। वाहीक आरोपविषयः। तौ द्वौ व्यक्तौ निर्दिष्टौ। अत्र गो शब्दः साधारणगुणाश्रयणेन परार्थं लक्षयति। तदुक्तम्-

**अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते।**
**लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता॥**

इति एवममृतं हरिकीर्तनमित्यादौ च।

**विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात्साध्यवसानिका॥6॥**

विषयिणारोप्यमाणेनान्यस्मिन्नारोपविषयेऽन्तः कृते निर्गीणे सैव साध्यवसानोच्यते। यथा- गौरेवायमित्यादौ। गवेह वाहीकोऽन्तर्निगीर्णः। एवममृतमेवेदमित्यादौ च। अस्मिन् भेदद्वये सत्यपि भेदे ताद्रूप्यप्रतीतिः सर्वथा भेदावगमश्च फलम्।

**भेदाविमौ च सादृश्यात्संबन्धान्तरतस्तथा।**
**गौणौ शुद्धौ च विज्ञेयौ।**

इमावारोपाध्यवसानरूपौ भेदौ सादृश्यात्संबन्धाद्गौणो। सम्बन्धान्तरतस्तु शुद्धौ, तत्र गौणौ दर्शितौ। शुद्धौ यथा-

आयुर्घृतम् आयुरेवेदमित्यादौ। अत्र सादृश्यादन्यत्कार्यकारणभावादिसम्बन्धान्तरम् तत्पूर्वके आरोपाध्यवसाने। एवम्- हरिभक्तिमहत्सङ्गः हरिभक्तिरेवायमित्यादौ च अस्मिन्भेदद्वयेऽन्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादि फलम्। क्वचित्तादर्थ्यात्सम्बन्धादुपचारः। यथा-

इन्द्रार्था स्थूणा इन्द्रः कृष्णसेवार्थो व्यापारः कृष्णसेवा अत्रेष्टार्थप्रदत्वम्।

क्वचित्स्वस्वामिभावात्। यथा-

राजसेवको राजा हरिसेवको हरिः॥

अत्रानुल्लङ्घ्याज्ञत्वादि ।

क्वचिदवयवावयविभावात्। यथा-

हस्ताग्रे-हस्तः जगद्विष्णुः। अत्र हस्तव्यापार-कारिसामर्थ्यादि। क्वचित्तात्कर्म्यात्। यथा-

ब्राह्मणोऽपि तक्षासौ ईश्वरोऽपि क्षत्रियोऽसौ। अत्र तत्कर्म नैपुण्यम्।

संकलयति-

**लक्षणा तेन षड्विधा।।7।।**

तेनोपादानादिप्रकारेण षोढा फलवती। इहोपादानलक्षणादिषु भेदेष्वाद्याभ्यामर्थान्तर-संक्रमितवाच्याऽत्यन्ततिरस्कृतवाच्यौ, मध्यमाभ्यां रूपकप्रथमातिशयोक्ती, शेषाभ्यां हेत्वलंकाराश्च निरूपयिष्यन्ते।

**व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने।**

रूढिलक्षणायां न किञ्चित् व्यङ्ग्यं फलवत्यां त्वस्ति तत्।

**तच्च गूढमगूढं वा।।**

तच्च व्यङ्ग्यम्। तत्र गूढं यथा-

**उत्कीर्णैरिव चित्रितैरिव नवोद्भिन्नैर्दिवोद्यद्वयः**
**कुन्दे विप्रमितैरिव स्मरकलाशाणे निशातैरिव।**
**मग्नोन्मग्नतयालसैरिव भृशं लावण्यवापीजले**
**केयं केलिकलानिधिः सुबलमे चेतो हरत्यङ्गकैः।।**

अत्रोत्कीर्णादिपदानि तत्सदृशेषु लाक्षणिकानि। तेषां व्यङ्ग्यं निगूढं प्रतीयते। तथाहि-

उत्कीर्णैरिति निर्माणसौष्ठवम्। चित्रितैरिति पादादिगतरामादिप्रद्योतः। नवोद्भिन्नैरिति सौकुमार्यम्। उद्यदिति सुबलितत्वम्। स्मरेति हृद्भेदकत्वम्। मग्नेति लावण्याधिक्यमिति गूढमेव।

अगूढं यथा-

**गोप्यस्तपः किमचरन्यदमुष्यरूपं**
**लावण्यसारमसमोर्ध्वमनन्यसिद्धम्।**
**दृग्भिः पिबन्त्यनुवाभिनवं दुराप-**
**मेकान्तधाम यशसः श्रिय ऐश्वरस्य।।**

अत्र दृग्भिः पानस्यासंभवात् सादरावलोको लक्ष्यते। गाढासक्तिर्व्यङ्ग्या। सा च वाच्यवत्प्रतीतेरगूढा।

**तदेषा कथिता त्रिधा॥8॥**

अव्यङ्ग्या गूढव्यङ्ग्याऽगूढव्यङ्ग्या चेति लक्षणानाम वृत्तिस्त्रिधा। एवमुपाधिमुक्त्वा तदाश्रयमाह-

**तद्भूर्लाक्षणिकः।** शब्द इति संबध्यते। तद्भूर्लक्षणाश्रयः शब्दो लाक्षणिकः कथ्यते।

अथ व्यञ्जकं निरूपयितुं तदुपाधिमुद्दिशति-

तत्र व्यापारो व्यञ्जनात्मकः। तत्र लाक्षणिके शब्दे व्यङ्ग्यबोधके सतीत्यर्थः सा च लक्षितान्यैः -

**विरताष्वभिधादीनां ययाऽर्थो बोध्यते परः।**
**सा वृत्तिर्व्यञ्जना नाम शब्दादीनां निगद्यते॥**

इति द्वेधा चैषा। शाब्दी आर्थी चेति। शाब्दी द्वेधा- अभिधालक्षणामूलत्वात्। तत्र प्रसंगाल्लक्षणामूला निरूप्यते-

**यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते॥9॥**
**फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया।**

फलं प्रतिपादियतुं यत्र लाक्षणिकः शब्दः प्रयुज्यते तत्र नान्यतस्तस्यत्पत्तिः, अपि तु तस्मादेव शब्दात्। तत्र वृत्तिव्यञ्जनैव। तथाहि-

**नाभिधा समयाभावात्।**

गङ्गायां घोषः इत्यादौ शैत्यादयो धर्मास्तटादौ प्रतीयन्ते, तत्र गङ्गादिशब्दानां नाभिधा संकेताभावात्।

**हेत्वभावान्न लक्षणा॥10॥**

मुख्यार्थः शक्यसम्बन्धः, रूढिफलान्यतरच्चेति लक्षणा या हेतुस्तदभावान्न सा। तमुपपादयति-

**लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो।**
**न प्रयोजनमेतस्मिन्न च शब्दः स्खलद्गतिः॥11॥**

गंगाशब्दस्य प्रवाहो मुख्योऽर्थस्तत्र बाधः, तस्य तीरेण संबन्धः। लक्षिते च तीरे शैत्यादिफलमिति गंगाशब्देन तीरं लक्ष्यते। एवं चेत्तीरमपि मुख्यं स्यात् तत्र च बाधा भवेत् तीरस्य च शैत्यादिना संबन्धः स्यात्। फले च तस्मिंल्लक्षिते फलमन्यद् भवेत्। तदा फलमपि तेन लक्ष्येत। न चैतत्किमप्यस्तीति। न च गंगा शब्दस्तीरमिव शैत्यादि बोधयितुं मन्थरः। लक्षणया तीरप्रत्ययानन्तरमेव झटित्येव व्यञ्जनया तत्प्रत्ययात्। तस्माद्विवक्षितान्वयानुपपत्यभावाच्च फले न लक्षणा।

**एवमप्यनवस्था स्याद्या मूलक्षतिकारिणी।**

एवमपीति। फलं चेल्लक्ष्यं तर्हि तदपि फलान्तरेण तदपि तदन्तरेणेत्येवं मूलभूतफल-लक्षणक्षतिरित्यर्थः।

**प्रयोजनेन सहितं लक्षणीयं न युज्यते॥13॥**

कस्मादित्याहा-

**ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्।**

प्रत्यक्षादेर्हि ज्ञानस्य शुक्लादिर्विषयः फलं तु ज्ञातता हानोपादानधीर्वा। विषयो ज्ञानस्य हेतुः फलं तु तस्य कार्यमिति युगपदप्रतीतेर्न सह लक्ष्यतेत्यनुशयः। यत्तूक्तम्-तीरं शैत्यादि च लक्षणयैव बोधयेत् इति, तन्न। शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात्।

**विशिष्टे लक्षणा नैवं।**

एवमुक्तयुक्त्या।

**विशेषाः स्युस्तु लक्षिते॥13॥**

लक्षिते तीरादौ विशेषाः शैत्यादयस्ते च व्यञ्जनयैव गम्याः स्युः। तथाहि-

गंगाशब्दः पूर्वमभिधया प्रवाहं प्रत्याययति। इतरथा मुख्यार्थबाधो न स्यात्तद्विरतौ लक्षणया तीरम्, तद्विरतौ व्यञ्जनया पावनत्वादीति। वाक्यार्थबोधनाय तात्पर्याख्या वृत्तिः, साप्यत्र नादृता। वाक्यं विनाप्येकस्य पदस्य पदांशस्य च व्यञ्जकत्वेन ध्वनिकाव्य-त्वाङ्गीकृतेः। तस्माद्व्यञ्जना नाम चतुर्थी वृत्तिर्ध्वननद्योतनादिपर्यायाऽवश्यमन्वेष्टव्यैवेति। ये त्वाहुः

इषुवेगवदभिधाव्यापारो दीर्घदीर्घतरस्तेन सर्वोऽप्यर्थो वाच्यः इति, तन्मते गङ्गायां घोषान्वयानुपपत्तेर्मुख्यार्थबाधादभिधैव नास्ति। कुतस्तस्या दीर्घदीर्घतरत्वम्, येन तटोऽपि बोध्यः। किमिति तैर्लक्षणोपास्या, तेनैव तदर्थसिद्धेः। किमिति च ब्राह्मण पुत्रस्ते जातः कन्या ते गर्भिणी इत्यादौ हर्षशोकादीनामपि न वाच्यत्वम्।

किंच वाच्यार्थव्यङ्ग्यार्थयोः त्वदंघ्रिमूलं भजतां मुकुन्द इत्यादौ निन्दास्तुतिरूपेण स्वस्वरूपस्य गतोऽस्तमर्कः इत्यादौ वाच्य एकरूपो व्यङ्ग्यस्तु तत्तत्प्रतिपत्रादिभेदाद्बहुविध इति संख्यायाः, वाच्यः शब्दोच्चारणमात्रेण वेद्यः स तु तथापि तथाविधप्रतिभानैर्मल्यादिना चेति निमित्तस्य शब्दाश्रयत्वेन शब्दतदेकदेशतदर्थवर्णसंघट्टनाश्रयत्वेन चाश्रयस्य, प्रतीतिमात्रचमत्कारयोः करणात्कार्यस्य,

**कस्य वा न भवेत्कोपः क्षतं वीक्ष्य प्रियाधरे।**
**आघ्रातभृङ्गवत्पद्मे दुःखं सहाधुना॥**

इति सखी तत्कान्तगतत्वेन विषयस्य, पदतदर्थमात्रनिपुणैः सहृदयैरेव च वेद्यतया प्रतिपत्तुः केवलरूपतया चमत्कारितया च प्रतीतेः। पूर्वपश्चाद्भावेन कालस्य च भेदः। न चानुमानं व्यङ्ग्यस्य बोधकम्। तत् परम्परायामनेकानुमानकल्पने गौरवात्। तथाहि-

**मनस्तव मनस्विन्या मलिनं न वपुस्तथा।**
**यत्पादनखराः कृष्णं श्लिष्यन्ति प्रतिबिम्बितम्।।**

अत्र पादनखरा इति मानादावृतसर्वाङ्गत्वं मुद्रितनेत्रत्वं च। अन्यथा पादोपान्तगत-कृष्णवीक्षासहिष्णुतवोपपत्तेः। पश्चात्सखीवचसा सत्वरं पादसंवृत्तिश्च। ततो मानशैथिल्यम्। कृष्णस्य च प्रणयजविनयमहिम्ना पादान्तिकमुपेत्यापि तत्स्पर्शाक्षमत्वम्। सख्याञ्च तत्पक्षपातित्वं स्वसखीमानहानिसाग्रहत्वं चेत्यादीनि वस्तून्येकानुमानैः साध्यानीति गौरवम्। व्यञ्जनावादिनस्त्वेकयैव व्यञ्जनयेति लाघवात्सैव श्रेयसीति।

अथाभिधामूला व्यञ्जना दर्श्यते-

**अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।**
**संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्।।14।।**

आद्यशब्दाद्वियोगादयः तदुक्तम्

**संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः।।**
**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः।।** इति।।

संनिधिरैकार्थ्यम्। औचिती योग्यता। व्यक्तिः पुंनपुंसकादिः। अनवच्छेदे संशये क्रमेणोदाहरणानि-

**सकौस्तुभो भाति विधुः शेते विधुरकौस्तुभः।**

अत्र कौस्तुभसंयोगवियोगाभ्यां विष्णौ विधुशब्दस्याभिधा नियम्यते।

रामलक्ष्मणयोः कीर्तिः इति साहचर्येण रामशब्दस्य दाशरथौ। कर्णार्जुनकृतो रणः इति विरोधितयाऽर्जुनशब्दस्य गाण्डीविनि। स्थाणुः कृष्णागुणामोदी इति गुणामोद-रूपार्थस्य वृक्षखण्डेऽसंभवात्तेन स्थाणुशब्दस्य शिवे।

**देवो जानाति मे मनः** इति प्रकरणादेव शब्दस्य युष्मदर्थे।

राधिकां बाधते नाथं कुपितो मकरध्वजः। इति लिङ्गेन मकरध्वजशब्दस्य कामे। कृष्णोऽयं मुनिवर्योऽस्ति इति मुनिवर्यशब्दसांनिध्यात्कृष्णशब्दस्य श्रीव्यासे।

प्रमत्तो मधुना पिकः इति मदविधानसामर्थ्यान्मधुशब्दस्य वसन्ते। प्रमततामधुना रामा इति तद्विधानयोग्यत्वान्माध्वीके च। चन्द्रो व्योम्नि चकास्त्यसौ इति देशविशेषा-

च्चन्द्रशब्दस्य शशिनि। चित्रभानुर्विभात्येषः इति चित्रभानुशब्दस्य दिने रवौ निशि त्वग्नौ। मित्रो मित्रं च दीप्यते इति। नपुंसकरूपया व्यक्त्या मित्रशब्दस्य सूर्ये सुहृदि च। स्वरस्तु वेद एवार्थविशेषप्रतीतिकृत् न तु काव्ये। आदिपदादभिनयादि। यथा-

**एतावत्कुचयुग्मेयमेतावन्नेत्रपङ्कजा ।**
**पङ्कजाक्षी भवत्वद्य तव वक्षस्यलंकृतिः।।**

एवं संयोगाद्यैरतेकार्थशब्दस्य वाचकत्वे नियमितेऽपि वाच्यभिन्नार्थधीहेतुर्व्यापारः। साभिधामूला व्यञ्जनैव।।

उदाहरणम्-

**अखिलरसामृतमूर्तिः प्रस्तृमरुचिरुद्धतारकापालिः।**
**कलितश्यामा ललितो राधा प्रेयान्विधुर्जयति।।**

अत्र प्रकरणात्कृष्णो वाच्यश्चन्द्रस्तु व्यङ्ग्यस्तयोरुपमानोपमेयभावश्च। एवं व्यञ्जनां निरूप्य तदाश्रयमाह-

**तद्युक्तो व्यञ्जकः शब्दः।**

तया व्यञ्जनया युक्तः शब्दो व्यञ्जक उच्यते।

**यत्सोऽर्थान्तरयुक्तथा।**
**अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः।।15।।**

यस्मादर्थान्तराश्रयः सन् शब्दो व्यञ्जकस्तस्मादर्थोऽपि सहकारितया तत्र तथा। शब्दस्य तत्र प्रबला शक्तिरिति व्यञ्जनायास्तन्मूलतया भणितिः।।

**इति भरसूत्रवृत्तौ साहित्यकौमुद्यां शब्दनिर्णयो नाम द्वितीयः परिच्छेदः।।**



